BHARAT... S. N.... LIBR

श्रीगणेशाय नमः।

# बृहद्देवता।

## प्रथमोऽध्यायः।

मन्त्रदृग्भ्यो नमस्कृत्य समाम्नायानुपूर्वशः।
सूक्तार्धर्चपादानामृचः[१] वक्ष्यामि दैवतम् ॥ १ ॥
वेदितव्य दैवतं हि[२] मन्त्रे मन्त्रे प्रयत्नतः।
दैवतज्ञो हि मन्त्राणां तदर्थमधिगच्छति[३] ॥ २ ॥
तद्विदा[४] तदभिप्रायानृषीणां मन्त्रदृष्टिषु।
विज्ञापयति विज्ञान कर्माणि विविधानि च ॥ २ ॥
न हि कश्चिदविज्ञाय याथातथ्येन दैवतम्[५]।
लौकिकानां वैदिकाना[६] कर्मणां फलमश्नुते ॥ ४ ॥
प्रथमो भजते त्वासां वर्गोऽग्निमिह दैवतम्।
द्वितीयो वायुमिन्द्रं वा तृतीय सूर्यमेव च[७] ॥ ५ ॥
अर्थमिच्छन्नृषिर्देव य यमाहायमस्त्विति।

---

(१) सूक्तभ्य इति ख॰ ग॰ ङ॰।
(२) वेदितव्यं हि तत् सर्वमिति क॰ घ॰।
(३) तदर्थमधिगच्छति इति ख॰।
(४) तद्वित्तानिति ख॰ घ॰।
(५) देवता इति क॰ घ॰।
(६) लौक्यानां वैदिकाना वा इति ख॰ ग॰ ङ॰।
(७) सूर्यमेव तु इति क॰ घ॰।

प्राधान्येन स्तुवन्भक्त्या[1] मन्त्रस्तद्दैव एव सः ॥ ६ ॥
स्तुतिस्तु नाम्ना रूपेण कर्मणा बान्धवेन च ।
स्वर्गायुर्धनपुत्राद्यैरर्थैराशीस्तु कथ्यते ॥ ७ ॥
स्तुत्याशिषौ तु याःकुत्र दृश्येते[2]ऽल्पास्तु ता इह ।
नाभ्यस्याल्पतरास्ताः स्युः स्वर्गो याभिस्तु याच्यते ॥ ८ ॥
स्तुवन्तं[3] वेद सर्वोऽयमर्थयत्येष मामिति ।
सौतीत्ययं ब्रुवन्नाह सार्थं मामेष[4] पश्यति ॥ ९ ॥
स्तुवद्भिश्च ब्रुवद्भिश्च ऋषिभिस्तत्त्वदर्शिभिः[5] ।
भवत्युभय[6]मेवोक्तमुभयं ह्यर्थतः समम् ॥ १० ॥
प्रत्यक्षं देवतानाम यस्मिन्मन्त्रे प्रदृश्यते[7] ।
तमेवाहुः सुसम्पन्नं मन्त्र लक्षणसम्पदा ॥ ११ ॥
तस्मात्तद्देवतानाम्ना[8] मन्त्रे मन्त्रे प्रयोगवित्[9] ।
बहुत्वमभिधानाञ्च[10] प्रयत्नेनोपलक्षयेत् ॥ १२ ॥

---

(१) स्तुवन् भक्त्येति ग० घ० ।
(२) स्तुत्याशिषस्तु याःकुत्र दृश्यन्ते इति क० घ० ।
(३) स्तुवंति इति ख० ङ० ।
(४) योऽर्थमामेव इति क० ।
(५) स्तुवद्भिर्वा ब्रुवद्भिर्वा ऋषिभिर्मन्त्रदर्शिभिरिति ख० । मन्त्रेष्वर्थानुदर्शिभिरिति क० ग० ।
(६) भवत्युतथ्यमिति क० घ० ।
(७) मन्त्रेऽभिधीयते इति ख० ग० ङ० ।
(८) तस्मात्तु देवतानाम्ना इति घ०, तस्मात्तु देवता नाम्ना इति ख० ग० ।
(९) प्रयत्नत इति घ० ।
(१०) बहुत्वमभिधानस्य इति क० घ० ।

सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते ।
दृश्यन्ते देवता यस्मिन्नेकस्य(१) बह्वृषु द्वयोः ॥ १३ ॥
देवतार्षच्छन्दोभ्यो(२)वैविध्यं तस्य जायते(३) ।
ऋषिसूक्तन्तु यावन्ति सूक्तान्येकस्य(४) वै स्तुतिः ॥ १४ ॥
देवतैका तु यावत्सु देवतायास्तदुच्यते(५) ।
यावदर्थसमाप्तिः स्यादर्थसूक्तं वदन्ति तत् ॥ १५ ॥
समानच्छन्दसो यास्तु(६) तच्छन्दःसूक्तमुच्यते ।
वैविध्यमेतत्सूक्तानामिह(७) विद्याद्यथातथम् ॥ १६ ॥
देवतानामधेयानि मन्त्रेषु त्रिविधानि तु।
सूक्तभाञ्ज्यथ ऋग्भाञ्जि तथा नैपातिकानि तु ॥ १७ ॥
सूक्तभाञ्जि भजन्ते वै सूक्तान्यृग्भाञ्जि वै(८) ऋचः ।
मन्त्रेऽन्यदेवतेऽन्यानि(९) निगद्यन्ते प्रसङ्गतः(१०) ॥ १८ ॥

---

(१) भिन्नं तद्दृश्यते यास्मिन्नेतस्यामिति क॰ घ॰। एकस्येत्यत्र एकस्मिन्निति घ॰।
(२) देवतार्षार्षच्छन्दस' इति ख॰।
(३) वैविध्यञ्च प्रजायते इति ख॰ ग॰ ङ॰।
(४) ऋषिसूक्तानि तान्यत्र यावन्त्येकस्येति क॰ घ॰।
(५) अस्मिन् श्लोकार्द्धस्थले ख॰ ग॰ ङ॰ पुस्तकेषु श्रूयन्ते तानि सर्वाणि ऋचे सूक्तं हि तस्य तत् इति पाठो वर्त्तते।
(६) या स्युरिति ख॰ ग॰ ङ॰।
(७) वैविध्यमेव सूक्तानामिहेति ख॰ ग॰ ङ॰।
(८) वै इत्यत्र यैरिति क॰ ख॰ घ॰ ङ॰।
(९) यानि इति घ॰।
(१०) निगद्यन्तेऽत्र कानिचित् इति ख॰ ग॰ पुस्तकान्तरेषु।

सालोक्यात्वाद्वपर्यादा तानि नैपातिकानि तु ।
तस्मादृक्प्रकारेऽपि[१] सूक्ते स्यात्सूक्तभागिनी ॥ १९ ॥
देवता तद्यथासूक्तमविशेषं[२] प्रतीयते ।
भिन्ने सूक्ते[३] वदेदेव देवतामिह लिङ्गतः ॥ २० ॥
तत्र तत्र यथावच्च मन्त्रान् कर्मसु[४] योजयेत् ।
देवतायाः परिज्ञानात्तद्धि कर्म समृध्यते ॥ २१ ॥
आद्यन्तयोस्तु सूक्तानां प्रसङ्गपरिकीर्त्तनात् ।
स्तोत्रभिर्देवतास्तास्ता उपेक्षेतेह[५] मन्त्रवित् ॥ २२ ॥
तत् खल्वाहुः कतिभ्यस्तु कर्मभ्यो नाम जायते ।
सत्वानां[६] वैदिकानां च[७] यदन्यदिह[८] किञ्चन ॥ २३ ॥
नवभ्य इति नैरुक्ताः पुराणाः[९] कवयश्च ये ।
मधुकः श्वेतकेतुश्च[१०] गालवश्चैव मन्यते[११] ॥ २४ ॥
निवासात्कर्मणो रूपान्मङ्गलाद्वाच आशिषः ।

---

(१) बह्वप्रकारेऽपि इति क० ङ० घ० ।
(२) अविशेषेति ख०, अविशेष्यमिति ग० ङ० पुस्तकान्तरञ्च ।
(३) भिन्नसूक्ते इति क० घ० ।
(४) कर्म प्रयोजयेदिति ख० ।
(५) देवतानाम्ना उपेक्षेतेह इति ख० । देवतानाम्नामपेक्षेतेह इति क० घ० ।
(६) सत्यानामिति क० ।
(७) वा इति क० ग० ।
(८) यद्वान्यदिहेति ङ० घ० ।
(९) पौराणा इति क० घ० ।
(१०) मधुकाश्च तकेताश्चेति क० घ० ।
(११) मन्यते इति क० ख० घ० ङ० ।

यदृच्छयोपवसना(१)त्तथामुष्यायणाज्जपात्(२) ॥ २५ ॥
चतुर्भ्य इति तत्राऽऽहुर्यास्कगार्ग्यरथीतराः(३) ।
आशिषोऽप्यर्थवैरूप्या(४) द्वाचः कर्मण एव च ॥ २६ ॥
सर्वाण्येतानि नामानि कर्मणस्त्वाह(५) शौनकः ।
आशीरूपस्य वाक्यस्य(६) सर्वं भवति कर्मतः ॥ २७ ॥
यदृच्छयोपवसना(७) त्तथामुष्यायणाच्च(८) यत् ।
तथा तदपि कर्मैव तच्छृणुध्वन्तु(९) हेतुतः(१०) ॥ २८ ॥
प्रजाः कर्मसमुत्था(११) हि कर्मतः सत्वसङ्गतिः(१२) ।
क्वचित् संज्ञायते(१३) सत्त्व निवासात्तत्प्रजायते(१४) ॥२९॥
यादृच्छिकं तु नामाभिधीयते(१५) लिङ्ग क्वचित्(१६) ।

(१) यदृच्छयोपवचनादिति क॰ ङ॰ घ॰ ।
(२) तथा मध्यायणाच्चेति क॰ घ॰ ।
(३) रथन्तरा इति ख॰ ।
(४) आशिषोऽथ च वैरूप्यात् इति क॰ घ॰ । आशिषोऽर्थवैरूप्यादिति ख॰ ङ॰ ।
(५) कर्मतस्त्वाह इति क॰ ग॰ ।
(६) वाच्यच इति ख॰ ग॰ ङ॰ ।
(७) यदृच्छयोपवचनादिति ख॰ ।
(८) यदृच्छया निवासाच्च यद्वा मध्यायणाच्चेति क॰ घ॰ ।
(९) तच्छृणु त्वं च इति ग॰ ।
(१०) हेतवः इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(११) प्रजाकर्मसमुत्था इति क॰ ख॰ ।
(१२) कर्मणः सत्त्व जायते इति क॰, सत्त्वगा गतिः इति ख॰ ।
(१३) सतो निवसते इति क॰ घ॰, क्वचित् स जायते इति ग॰ ।
(१४) तच्च जायते इति घ॰ ।
(१५) नाम नामाधीयते इति ख॰ । यादृच्छिकं नाम नाम धीयते क॰ घ॰ ।
(१६) यत्र कुत्रचिदिति ख॰, यच्चिह्न क्वचिदिति घ॰ ।

औपम्यादिव[१] तद्विद्याद्[२] भावस्यैवेह कस्यचित् ॥ २०॥
नाकर्मकोऽस्ति भावो हि न[३] नामास्ति[४] निरर्थकम् ।
नान्यत्र भावान्नामानि तस्मात्सर्वाणि कर्मतः ॥ २१ ॥
मङ्गलात् क्रियते यत्तु नामोपवचनाच्च[५] यत् ।
भवत्येव तु सा ह्याशीः स्वस्त्यादेर्मङ्गलानि च[६] ॥ २२ ॥
अपि कुत्सितनामाय[७]मिह[८] जीवेत्कथञ्चिरम् ।
इति क्रियन्ते नामानि भूतानां विदितान्यपि[९] ॥२३॥
मन्त्रा नानाप्रकाराः स्युर्दृष्टा वै[१०] मन्त्रदर्शिभिः ।
स्तुत्या चैव विभूत्या च वाक्प्रभावेण चात्मनः[११] ॥२४॥
स्तुतिः प्रशंसा निन्दा च संशयः परिदेवना[१२] ।
स्पृहाशीः कत्थना याच्ञा[१३]प्रश्नः प्रैषः प्रवह्लिका[१४]॥२५॥
नियोगश्चानुयोगश्च श्लाघा विलपितञ्च यत् ।

---

(१) औपम्यादयीति ख॰, औपम्यादिह इति ग॰ घ॰ ङ॰ ।
(२) तद्वत्ते इति घ॰ ।
(३) नु इति घ॰ ।
(४) वन्नामास्ति निरर्थकमिति ख॰ ।
(५) यच्च नामोपवचनञ्च इति क॰ ख॰ घ॰ ।
(६) स्वाशास्ते मङ्गलानि च इति क॰ घ॰ । मङ्गलादिहेति ख॰ ङ॰ ।
(७) अपिकिल्पितनामायमिति ख॰ ।
(८) अपि इति घ॰ ।
(९) निन्दितान्यपि इति क॰ घ॰ ।
(१०) ये इति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(११) प्रभावाद्देवतात्मनं इति ख॰ ग॰ अन्यत्पुस्तकञ्च ।
(१२) परिवेदना इति क॰ ङ॰ ।
(१३) कथनायाच्ञेति क॰ ।
(१४) प्रवल्हिका इति ख॰ ग॰ ।

आचिख्यासा[1]ऽथ संलापः प्रविचाख्यान[2]मेव च ॥ ३६ ॥
आहनस्या नमस्कारः प्रतिरोध[3]स्तथैव च ।
सङ्कल्पश्च प्रलापश्च प्रतिवाक्यश्च नाम यत्[4] ॥ ३७ ॥
प्रतिषेधोपदेशौ च प्रमादापह्नवौ च यत्[5] ।
उपप्रेषश्च यः प्रोक्तः सञ्ज्वरो नाम[6] विस्मयः ॥ ३८ ॥
आक्रोशोऽभिष्टवश्चैवा[7]क्षेपः शापस्तथैव च ।
उपसर्गा निपाताश्च[8] नाम चाख्यातमित्यपि[9] ॥ ३९ ॥
भूतं भव्यं भविष्यच्च पुमांस्त्र्यथ[10]नपुंसकम् ।
एवंप्रकृतयो मन्त्राः सर्ववेदेष्विति स्थितिः[11] ॥ ४० ॥
तेषां निदर्शनार्थीया[12] ऋचोऽर्धर्चाः पदानि च ।
ब्राह्मणे चाथ कल्पे च निगद्यन्तेऽत्र कानिचित्[13] ॥ ४१ ॥

---

(१) आविख्यासेति ख० ।
(२) सञ्ज्ञापा परिचाख्यान इति घ० ।
(३) प्रतिराध इति घ० प्रतिषेध इति अन्यत्पुस्तकाच्च ।
(४) तथैव च इति ग० अन्यत्पुस्तकाच्च ।
(५) च ह इति ग० अन्यत्पुस्तकाच्च ।
(६) यस्य इति ख० ग० ङ० अन्यत्पुस्तकाच्च ।
(७) आक्रोशोऽभिष्टवश्चैव इति ग० अन्यत्पुस्तकाच्च, आक्रोशोऽभिष्टवश्चैव इति ख० ।
(८) उपसर्गा निपाताश्चेति क० घ०, उपसर्गा निपातश्चेति ख० ।
(९) चाख्यानमेव चेति क० ।
(१०) स्त्री च इति ग० अन्यत्पुस्तकाच्च ।
(११) सर्ववेदेषु सर्वशः इति ख० ग० ङ० अन्यत्पुस्तकाच्च । सर्वदेवेष्विति स्थितिरिति घ० ।
(१२) वाक्यार्थदर्शनार्थीया इति ङ० अन्यत्पुस्तकाच्च ।
(१३) विधौ कल्पे च देवे च निगद्यन्तेऽत्र कानिचिदिति क० घ० ।

शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते ।
तदाक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ ४२ ॥
अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः[1] ।
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ ४३ ॥
क्रियासु बह्वीष्वभिसंश्रितो यः
पूर्वापरीभूत इहैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यातशब्देन तमर्थमाहुः ॥ ४४ ॥
क्रियाभिनिर्वृत्तिवशोपजातः
कृदन्तशब्दाभिहितो यदा स्यात् ।
सङ्ख्याविभक्त्यव्ययलिङ्गयुक्तो
भावस्तदा द्रव्यमिवोपलक्ष्यः[2] ॥ ४५ ॥
यथा नानाविधैः शब्दैरपश्यन्नृषयः पुरा ।
विविधान्यपि[3] वाक्यानि तान्यनुक्रमतः शृणु ॥ ४६ ॥
रूपादिभिः स्तुतिः प्रोक्ताऽऽशीः[4] स्वर्गादिभिस्तथा ।
यानि वाक्यान्यतोऽन्यानि[5] तान्यपि स्युरनेकधा ॥ ४७ ॥

---

(१) विभक्तय इति ग॰ ग्रन्थपुस्तकस्य।
(२) शब्देनेत्यादि भावस्तदा द्रव्यमिवोपलक्ष्य॰ इत्यन्त सन्दर्भः क॰ घ॰ चिह्नितपुस्तकयोर्नोपलभ्यते।
(३) विविधानीह इति ख॰ ग॰ घ॰ ।
(४) स्थाशीरिति क॰ ख॰ ग॰ ।
(५) यानि इति ग्रन्थत्यस्तकस्य ।

मन्त्रे[१] प्रशंसा[क] भोजस्य[२] चित्रदत्[ख] सौभरेः[३][ग]स्तुतिः ।
आक्रोशार्थास्तु दृश्यन्ते[घ]माता चेत्यभिमेयति[४] ॥४८॥
व्यङ्गोघमन्तं[ङ] निन्दा च[५] शापो[च] यमेत्यृगेव तु ।
याञ्चा[६] [छ]यदिन्द्रचित्रेति क्षेपो भौदमिति त्वृचि ॥४९॥
आशीस्तु[ज] वात आवातु दण्डेति परिदेवना[७] ।
प्रश्नश्च प्रतिवाक्यश्च[झ] पृच्छामि त्वेत्यृचौ पृथक् ॥५०॥
संशयोऽधःस्विदासीच्च[ञ] कत्थना[८] स्या[ट]दहं मनुः ।
इमं नो[ठ] यज्ञमित्यस्यां[ड] नियोगः[९] पाद उच्यते[१०] ॥५१॥

---

(१) मन्त्रः इति क० घ० ।

(२) प्रसङ्गाद्भोजस्य इति क० घ० मन्त्रप्रशंसा भोजस्येति ग० ।

(३) सौभरस्तुतिरिति ख० ।

(४) मा नामेत्याभिमेष्यति इति ख०, माता मेत्यभिमेयति इति क०ङ० ।

(५) ऋग्भोयमनतिदाच इति ख० ।

(६) यास्यां इति ख०, याञ्चा इति ग०, यत्पृना इति घ० ङ० ।

(७) दण्डादिपरिवेदना इति घ०, दण्डेतिपरिवेदना इति ख० च० ।

(८) संशयोधः स्विदासीदित्यकाथना इति क० घ०, कत्थना इति ङ० ।

(९) यज्ञमित्याद्यानियोगः इति ख० ।

(१०) उत्तमे इति क० घ० ।

---

(क) ऋ० १०,१०७,१० । (ख) ऋ० ८,२१,१८ । (ग) ऋ० ८,१९, २ । (घ) ऋ० १,१६०, २१; १८५, १० । (ङ) ऋ० १०, ११७, ६ । (च) ऋ० ८, ३७, २० । (छ) ऋ० ५,३६, १ । (ज) ऋ० १०,१८६, १ । (झ) ऋ० १, १६४, ३४ । (ञ) ऋ० १०, १२९, ५ । (ट) ऋ० ४, २६, १ । (ठ) ऋ० १, १, ४ । (ड) ऋ० १, २६, १ ।

[क]इह ब्रवीत्यनुयोगः संलाप[१]स्तृगुपोपमे[२][ख] ।
प्रतिषेधोपदेशौ[३] तु ऋचैर्मैत्य[ग]चसंस्तुतौ[४] ॥५१॥
आख्यान[५]न्तु हये जाये[घ] विलापस्तु[६]नदस्य मा[ङ] ।
अवीरामिव मां[च] श्लाघा[७] सुदेव इति[छ] तु स्पृहा ॥५३॥
नमस्कारः[ज] प्रइन.शेपे,[८] नमस्ते अस्तु विद्यते ।
सङ्कल्पयन्निदं तुल्योऽहं स्यामिति यदुच्यते[९] ॥५४॥
सङ्कल्पस्तु[झ] यदिन्द्राहं प्रलापस्त्वेतयस्य नुः[ञ][१०] ।
महानग्न्याहनस्या तु प्रतिरोधो भुगित्युत[११] ॥५५॥

---

(१) सल्लाप इति क० ग० घ० ।
(२) स्तृगुपोपमे इति ख० ग० धन्यत्पुस्तकेषु ।
(३) प्रतिषेधापदेशौ इति घ० ङ० ।
(४) ऋचैरित्यचसंस्तुत, इति घ० ।
(५) आख्यातमिति पुस्तकान्तरम् ।
(६) स्यादिति ख० ग० पुस्तकान्तरेषु ।
(७) अवीरामात्मनः श्लाघा इति ख० ग० घ० ।
(८) नमस्कारो मत ऋषे इति क० घ० शेष इति ख०, शेषे इति ङ० ।
(९) यां कल्पयन्ति नो रयः परिमाद्धक्षमिद ते इति क० ।
(१०) यः इति ख० ग० ङ० पुस्तकान्तरेषु ।
(११) महानग्न्याह नश्याश्वात्मनिरोगो भुगित्यपि इति ख०, भुगि-त्यपि इति ग०, भुगित्यभि इति पुस्तकान्तरं ।

---

(क) ऋ० १, ३५, ६ । (ख) ऋ० ८, ८२, ४ । (ग) ऋ० १०, ३४, १३ । (घ) ऋ० १०, ९५, १ । (ङ) १, १०९, ४ । (च) ऋ० १०, ८६, ९ । (छ) ऋ० १०, ९४, १४ । (ज) ऋ० १, २४, १२, १३ । (झ) ऋ० ८, १४, १ । (ञ) ऋ० ६, १५, ५ ।

प्रमादस्त्वेष[१]हन्ताहं[क] नमश्च[ख] इत्यभिप्लवः[२]।
इन्द्राकुत्सेत्युपप्रैषो[ग][३] न विजानामि[घ] संज्वरः॥ ५६॥
होतायक्षदिति प्रैषः[४] को अद्धेति तु विस्मयः।
जामयस्[५]पक्ववो नेति वितताद्धि[ङ] प्रवह्लिका[६]॥ ५७॥
[च]न मृत्युरासीदित्येतामाचिख्यासां[७] प्रपद्यते[८]।
अभिशापो[९]प्रजाः सन्तु भद्र[१०]मागोस्तु[छ] गौतमे[११]॥ ५८॥
यक्ष्येवं प्रकार[१२]न्तु शक्यं द्रष्टुमिहार्षजम्[१३]।

---

(१) प्रमोदस्त्वेष इति घ०।

(२) प्रमादस्त्वेकहन्ताहं नमस्व इत्यप्लव इति ख०, नमस्व इत्यपप्लव' इति ग०।

(३) इन्द्राकुत्सेत्यपप्रैषो इति ख०, इन्द्राभरेत्युपप्रैषो इति क० ख०।

(४) होतापक्षदितिप्रैषा इति ख०।

(५) आमये इति घ०, जामनु इति ग०, यामनु इति ख०।

(६) प्रवल्हिका इति ख० ग०।

(७) माचिख्यासमिति क०, माविज्ञासामिति ख०, माचिख्यासमिति घ०।

(८) प्रपद्यसे इति क०, प्रपद्यमे इति ख०।

(९) व्याविशापोः इति ख०।

(१०) रुद्रमिति ख०।

(११) इगौतमे इति ख०।

(१२) यज्ञमेव प्रकारमिति ख०।

(१३) इतीदृशमिति ख० ग० पुस्तकान्तरयोः।

---

(क) ऋ० १०, ११९, ९। (ख) ऋ० ७, २८, १०। (ग) ऋ० ५, ३१, ९। (घ) ऋ० १, १६४, ३७। (ङ) ऋ० १, १५२, ४। (च) ऋ० १०, १२९, २। (छ) ऋ० १, ७९, १०।

वक्तुं प्रयोगतस्त्वेषामृक्सूक्तार्धर्चसंश्रितम्[1] ॥ ५९ ॥
एते तु मन्त्रवाक्यार्थां देवतां सूक्तभागिनीम्[2] ।
संश्रयन्ते[3] यथान्यायं स्तुतिस्तत्रानुमानिकी[4] ॥ ६० ॥
भवद्भूतं भविष्यच्च जङ्गमं स्थावरञ्च यत्[5] ।
अस्यैके[6] सूर्यमेवैकं प्रभवं प्रलयं विदुः ॥ ६१ ॥
[क]असतश्च [ख]सतश्चैव [ग]योनिरेषा[7] [घ]प्रजापतिः ।
त्यद्[8]चरञ्चा[ङ]व्यय[च]ञ्च यच्चैत[छ]द्ब्रह्म[9]शाश्वतम् ॥ ६२ ॥
कृत्वैव[10] हि[ज] त्रिधा[झ]त्मानमेषु लोकेषु [ञ]तिष्ठति ।

---

(१) ऋक्सूक्तार्धर्चसंस्थिति इति क०, चैषा युक्सुक्तार्धर्चसंश्रितमिति ख० ।
(२) देवतां सूक्तभागिगामिति क० घ०, देवता सूक्तभागिनी इति ख० ।
(३) संभूयते इति ख० ।
(४) स्या श्चानुमानिकी इति ख०, तत्रानुमानिकी इति घ० ।
(५) भवद्भूतस्य भव्यस्य जङ्गमस्थावरस्य च इति ख० ग० पुस्तकान्तरञ्च ।
(६) एते इति क० घ० ।
(७) एषामिति क० ।
(८) यदक्षरञ्च वाच्यमिति ग०, वाक्यमिति ङ० पुस्तकान्तरञ्च ।
(९) यद्यैतद्ब्रह्म इति ग० ङ० पुस्तकान्तरञ्च ।
(१०) कृत्वैव इति ख० ग० पुस्तकान्तरञ्च ।

---

(क) ऋ० ५, १२, ४ । (ख) ऋ० १, ३६, ३ । (ग) ऋ० १, १०४, १ । (घ) ऋ० ४. ५१, २ । (ङ) ऋ० १, १६४, ४२ । (च) ऋ० ६, ३७, ३ । (छ) ऋ० १, १०, ४ । (ज) ऋ० १, ११७, २४ । (झ) ऋ० १, १६१, ६ । (ञ) ऋ० १, ५१, ११ ।

(क)देवान् यथायथं(ख) सर्वान् निवेश्य(ग) स्वेषु(घ) रश्मिषु ॥ ६३ ॥
एतद्भूतेषु[1] लोकेषु अग्निभूतं स्थितं त्रिधा ।
(ङ)ऋषयो (च)गीर्भि(छ)रर्चन्ति व्यञ्जितं[2] (ज)नामभि(झ)स्त्रिभिः॥ ६४ ॥
तिष्ठत्येव च[3] (ञ) भूतानां(ट) जठरे जठरे ज्वलन् ।
त्रिस्थानं चैनमर्चन्ति होत्रायां(ठ) वृक्तबर्हिषः ॥ ६५ ॥
इहैव(ड) पवमानो (ढ)ऽग्नि[4]र्मध्यमोऽग्निस्तु(ण) पावकः[5] ।
असुष्मिन्नेष[6] विप्रैस्तु लोकेऽग्निः(त) शुचिरुच्यते ॥ ६६ ॥
इहाग्निभूतस्त्वृषिभिर्लोके स्तुतिभिरीडितः[7] ।
(थ)जातवेदाः स्तुतो मध्ये स्तुतो(द) वैश्वानरो दिवि ॥ ६७ ॥

---

(१) एतमेवैषु इति क० घ० ।
(२) व्यञ्जनमिति ङ० घ० पुस्तकान्तरञ्च ।
(३) एष च इति ख०, एष ह्येति ग० पुस्तकान्तरञ्च ।
(४) पवमानाग्निरिति क० घ० ।
(५) वनस्पतिरिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) असुष्मिन्नेव इति ग० ङ० पुस्तकान्तरञ्च ।
(७) ईरितः इति क० ख० ङ० ।

---

(क) ऋ० १, १, २ । (ख) ऋ० १, १९१, ८ । (ग) ऋ० ८, ८४, ८ । (घ) ऋ० १, १२४, ४ । (ङ) ऋ० १, ४८, १४ । (च) १, ६, ६ । (छ) ऋ० १, १०, १ । (ज) ऋ० १, १५५, ६ । (झ) ऋ० ८, ५६, ५ । (ञ) ऋ० ३, २७, ६ । (ट) ऋ० १, १०४, ६ । (ठ) ऋ० १, ३, ३ । (ड) ऋ० ८, १०१, १४ । (ढ) ऋ० १, १, २ । (ण) ऋ० १, ६०, ४ । (त) ऋ० १, ६६, १ । (थ) ऋ० १, ७७, ५ । (द) १, ५६, ६ ।

[क]रसान् रश्मिभि[ख]रादाय[ग] वायुनाऽयं गतः सह[१]।
[घ]वर्षत्येष च यल्लोके[ङ] तेने[च]न्द्र [छ]इति स स्तुतः[२] ॥ ६८ ॥
[ज]अग्नि[झ]रस्मि[ञ]न्नथेन्द्रस्तु मध्यमो[३][ट]वायुरेव च।
[ठ]सूर्यो [ड]दिवीति विज्ञेयास्तिस्र एवेह[४] देवताः ॥ ६९ ॥
एतासामेव माहात्म्यान्नामान्यत्वं विधीयते।
तत्तत्स्थानविभागेन तत्र तत्रोपलक्षयेत्[५] ॥ ७० ॥
[ढ]तासा[ण]मियं [त]विभूतिर्हि [थ]नामानि यदनेकशः।
[द]आहुस्तासां तु मन्त्रेषु[ध] कवयोऽन्योऽन्ययोनिताम्[६] ॥७१॥
यथास्थानं[न] प्रदिष्टास्ता[७] नामान्यत्वेन देवताः।

---

(१) सह संस्तुतः इति क० घ०।
(२) तु स्तुतः इति क० घ०।
(३) मध्यतः इति ग०।
(४) एवहि इति क० घ०।
(५) तत्र तत्रैव दृश्यते इति ग० ङ० पुस्तकान्तरश्च।
(६) अन्योऽन्ययोगितामिति ख०।
(७) स्तु इति क०।

---

(क) ऋ० १, १९, ८। (ख) ऋ० ४, २६, ६। (ग) ऋ० १, १४, १०। (घ) ऋ० ५, ८४, ३। (ङ) ऋ० १, २१, ६। (च) ऋ० १, २, ५। (छ) ऋ० १, १०९, ३। (ज) ऋ० १, १, २। (झ) ऋ० १, ९, ९। (ञ) ऋ० १, ४, ३। (ट) ऋ० १, १३४, २। (ठ) ऋ० १, २३, १७। (ड) ऋ० १, ६, १। (ढ) ऋ० १, ३२, ८। (ण) ऋ० १, ४८, ७। (त) ऋ० १, ३०, ५। (थ) ऋ० १, ७२, ३। (द) ऋ० १, ११८, ३। (ध) ऋ० ५, ५७, ८। (न) ऋ० ३, ३०, १९।

तद्भक्तास्तत्प्रधानाश्च(क) केचिदेवं वदन्ति ताः[१] ॥ ७२ ॥
(ख)पृथक् (ग)पुरस्तादुये त्वृक्ता[२] लोकादिपतय(घ)[३]स्त्रयः ।
(ङ)तेषा(च)मात्मैव तत्सर्वं यद्यद्भक्तिः प्रकीर्त्यते[४] ॥ ७३ ॥
तेजस्त्वे(छ) वायुर्ध[५] प्राक्रवाहनश्चैव तस्य तत्[६] ।
(ज)इमामैन्द्रीञ्च (झ)दिव्याश्च (ञ)वाचमेवं पृथक् स्तुताम् ॥ ७४ ॥
बह्नदेवतायाः (ट)स्तुतयो द्वन्द्वशः स्तुतयश्च[७] याः ।
प्राधान्यमेव सर्व्वासु[८] पत्नीनामेव[९](ठ) तास्वपि ॥ ७५ ॥

---

(१) नैवं केचिद्वदन्ति तु इति क० घ०, तु इत्यत्र ता. इति पुस्तकान्तरं ।

(२) येत्वृक्ता इति ख०, पुरस्ताद्यौरुक्ता इति घ० ।

(३) लोकाधिपतयः इति क० घ ।

(४) यदन्यद्भक्तिः कीर्त्यते इति क० घ० ।

(५) तेजस्ते वायवः इति क० ङ०, वायवाः इति ग० । तेजसे वायवा इति ख०, ।

(६) यस्य यत् इति क० ख० ग० ङ० पुस्तकान्तरञ्च ।

(७) दिवत्वं स्तुतयश्च इति ग० ङ० पुस्तकान्तरञ्च, दिवत्वं ततयश्च इति ख० ।

(८) प्राधान्यमेषां भूतानां इति क० घ० ।

(९) इव इति ख० ग० ङ० ।

---

(क) ऋ० ५, ३७, २ । (ख) ऋ० १, १३१, २ । (ग) ऋ० १, १२३, १० । (घ) ऋ० १, ३४, २ । (ङ) ऋ० १, २, १ । (च) ऋ० १, ११५, १ । (छ) ऋ० २, १५, ४ । (ज) ऋ० १, ३१, १६ । (झ) ऋ० ९, ९७, १७ । (ञ) ऋ० १, ४०, ६ । (ट) ऋ० ६, ३४, १ । (ठ) ऋ० २, २८, ९ ।

[क]स्थानं [ख]नामानि भक्तीश्च[1] देवतायाः स्तुतौ स्तुतौ ।
सम्पादयन्नुपेचेत[2]याङ्काश्चिदिह सम्पदम् ॥ ७६ ॥
अग्निभक्तिस्तु तान् सर्वान[ग]ग्नावेव[3] समापयेत् ।
यदिन्द्रभक्ति तच्चैन्द्रे[4] [घ]सूर्ये[5] सूर्यानुगञ्च[ङ] यत् ॥ ७७ ॥
निरूप्यते[6] हवि[च]र्यस्यै[7] सूक्तन्तु [छ]भजते च [ज]या ।
[झ]सैव [ञ]तत्र प्रधानं स्यान्न[ट]निपातेन [ठ]याः [ड]स्तुताः ॥७८॥
[ढ]इति[9]चयाणामेतेषा[10] [ढ]मुक्तः सामासिको विधिः ।
समासेनैवमुक्तस्तु[11] विस्तरेण त्वनुक्रमः[12] ॥ ७९ ॥

---

(१) भक्तिश्चेति क० घ० ।
(२) संवादो यस्त्वपेच्चेत इति क० ।
(३) या सर्व्वामग्नावेव इति क० ।
(४) यदिन्द्रभक्तितच्चैन्द्रे इति क० घ० ।
(५) सौर्य्ये इति ङ० पुस्तकान्तरञ्च ।
(६) निरुप्यत इति घ० ।
(७) यस्मै इति घ० ।
(८) तत्र तत्र प्रधानोऽसौ न इति क० घ० ।
(९) इह इति क० घ० ।
(१०) एवैषामिति ग० ।
(११) समापद्यन्तु तत्सर्व्वमिति क० घ० ।
(१२) ध्यनुक्रमादिति घ० ।

---

(क) ऋ० ५, ७६, ४ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० १, १२४, १ । (घ) ऋ० १, २३, १७ । (ङ) ऋ० १, १, ६ । (च) ऋ० १, १२, ११ । (छ) ऋ० १, ९४, २ । (ज) ऋ० १, १२३, ४ । (झ) ऋ० १, २२, २ । (ञ) ऋ० १, ४८, १० । (ट) ऋ० १, ६, ६ । (ठ) ऋ० १, १०, ६ । (ड) ऋ० १, २३, १७ । (ढ) ऋ० ४, ३०, ७ ।

अवश्यं वेदितव्यो हि नाम्नां[१] [क]सर्वस्य विस्तरः ।
न हि [ख]नामान्यविज्ञाय [ग]मन्त्राः शक्या हि वेदितुम् ॥८०॥
मतान्यमूर्त्तान्यपि च [घ]देवता च[२] महर्षयः ।
तुष्टुवुर्ऋषयः शश्वत्[३][ङ] तासु तासु स्तुतिष्विह[च] ॥८१॥
यैस्त्वग्नि[४][छ]रिन्द्रः [ज]सोमश्च [झ]वायुः [ञ]सूर्यो [ट]बृहस्पतिः ।
[ठ]चन्द्रोऽथ[ड]विष्णुः[ढ]पर्जन्यः[ण]पूषा वा[५][त]ऽप्यृभवो[६][थ]ऽश्विनौ॥८२
[द]रोदसी [ध]मरुतो [न]देवाः[७] [प]पृथिव्यापः [फ]प्रजापतिः ।

---

(१) नाम्नां इति क॰ ङ॰, नाम्नः इति घ॰ ।
(२) देवतावदिति क॰ घ॰ ।
(३) तुष्टुवुश्च प्रशंसयेति क॰ घ॰ ।
(४) यैरग्निरिति घ॰ ।
(५) वा इति ख॰ ङ॰ पुस्तकान्तरेषु ।
(६) पूषोथा भगवः इति क॰ घ॰ ।
(७) देव्याः इति क॰ घ॰ ।

---

(क) ऋ॰ १०,११०,६ । (ख) ऋ॰ १, ७२, ३ । (ग) ऋ॰ ६,१०,१४ ।
(घ) ऋ॰ १, २२, ५ । (ङ) ऋ॰ २, ३८, ८ । (च) ऋ॰ १, १, २ ।
(छ) ऋ॰ १, १, २ । (ज) ऋ॰ १, २, ५ । (झ) ऋ॰ १, १८, ४ ।
(ञ) ऋ॰ १, ११४, ३ । (ट) ऋ॰ १, २०, १७ । (ठ) ऋ॰ १, ११०, ५ ।
(ड) ऋ॰ १, २२, १६ । (ढ) ऋ॰ ४, ५७, ८ । (ण) ऋ॰ १, २३, १४ ।
(त) ऋ॰ १, १११, १ । (थ) ऋ॰ ५, ७५, ७ । (द) ऋ॰ १, १६०, ५ ।
(ध) ऋ॰ १, १५, २ । (न) ऋ॰ १, २३, १९ । (प) ऋ॰ १, २२, १६ ।
(फ) ऋ॰ ४, ५३, २ ।

(क)देवौ च (ख)मित्रावरुणौ पृथक् सह च ता(ग)वुभौ ॥८३॥
(घ)विश्वे च देवाः (ङ)सविता (च)त्वष्टा वै रूपकृन्मतः(१) ।
(छ)अश्वो(ज)ऽन्न(झ)मृत्विजो(ञ)वज्रो(२)(ट)ग्रावाणो रथसंयुतः(३) ॥७४॥
(ठ)स्तुताः पृथक् पृथक् (ड)स्वैः स्वैः सूक्तैश्चर्ग्भिश्च(४) (ढ)नामभिः ।
स्तुतौ स्तुतौ प्रवक्ष्यामि (ण)तानि (त)तेषामनुक्रमात् ॥८५॥
व्यवसे(थ)न्मन्त्रमाग्नेयं लिङ्गै(द)रग्नेश्च(५) लक्षितम् ।
हविर्यद्भिः(६) प्रधानैश्च(७) नामाङ्कानैश्च केवलैः ॥८६॥

---

(१) रूपकृन्मुखः इति घ० ।
(२) यज्ञः इति घ० ।
(३) रथसंयुगः इति घ० ।
(४) सूक्तैर्ऋक्षु च इति घ० ।
(५) तु इति घ० ।
(६) हविष्यद्भि इति ग० घ०, हविर्भिरितिपाठः समीचीनः ।
(७) निरूप्यैवमिति घ० । —

---

(क) ऋ० ६, ५८, ५ । (ख) ऋ० १, ३५, १ । (ग) ऋ० १, १७९, ६ । (घ) ऋ० १, ८९, १० । (ङ) ऋ० १, २२, ८ । (च) ऋ० १, ३२, २ । (छ) ऋ० १, ३६, ८ । (ज) ऋ० १, १४०, २ । (झ) ऋ० १, ६०, ३ । (ञ) ऋ० १, ५१, ७ । (ट) ऋ० १, ८९, ४ । (ठ) ऋ० ४, ३७, ७ । (ड) ऋ० १, ६८, ४ । (ढ) ऋ० १, १५५, ६ । (ण) ऋ० १, ५३, ६ । (त) ऋ० १, २, १ । (थ) ऋ० १, ३१, १३ । (द) ऋ० १, २४, २ ।

ऐन्द्रस्तु[क][1] मन्त्रो[2] वायव्यैर्लिङ्गै[ख]रैन्द्रैश्च लक्ष्यते[3] ।
नामधेयैश्च[4] [ग]वज्रस्य बलकृत्या बलेन च ॥ ८७ ॥
सौर्यस्तु लिङ्गैः[घ] सूर्यस्य[5] गुणैः सर्वैस्तु[6] तैजसैः ।
[ङ]नामभिश्चैव[7] चन्द्रस्य सूक्तश्च[8] [च]भजतेऽच यैः[9] ॥ ८८ ॥
एतासां[10] देवतानान्तु नामधेयानुकीर्त्तनैः ।
[छ]यस्य यस्येह यावन्ति न व्यवस्यन्त्य[ज]तो[11][झ]ऽन्यथा ॥ ८९ ॥
[ञ]अयं प्रयोगस्त्वेतेषां[ट] ज्योतिषां[12][ठ] त्रिषु[ड] वर्त्तते ।

---

(१) ऐन्द्रेस्तु इति ख॰ घ॰ ।

(२) मन्त्रै इति घ॰ ।

(३) लक्षितमिति घ॰ ।

(४) नामभिश्चैव इति क॰ घ॰ ।

(५) सौर्य्यैश्च इति घ॰ ।

(६) च इति ख॰ घ॰ ।

(७) नामधेयैश्चेति ख॰ ग॰ ङ॰ ।

(८) सूर्यन्तु इति क॰ घ॰ ।

(९) य इति ख॰ पुस्तकान्तरेषु, अखिलैरिति घ॰ ।

(१०) अन्यासामिति घ॰ ।

(११) न व्यवस्यन्त्यतः इति ग॰ घ॰ ।

(१२) ज्योतिःषु इति ख॰ घ॰ ।

---

(क) ऋ॰ १, १४७, ४ । (ख) ऋ॰ ३, ५३, ८ । (ग) ऋ॰ ५, ३२, ७ । (घ) ऋ॰ १, १४, ६ । (ङ) ऋ॰ १, १५५, ६ । (च) ऋ॰ १, १२३, ४ । (छ) ऋ॰ १, ५, ४ । (ज) ऋ॰ १, ६, ९ । (झ) ऋ॰ ४, ३२, ८ । (ञ) ऋ॰ १, १६, ७ । (ट) ऋ॰ १, ११३, १ । (ठ) ऋ॰ १, १५, ४ । (ड) ऋ॰ १, ८९, १ ।

लोकेषु मन्त्रवि[क]द्विद्वान् प्रयोगेनावसीदति ॥ ८० ॥
[ख]नीयतेऽयं नृभिर्यस्मा[ग]न्नयत्य[घ]स्मा[ङ]दसौ च तं[१] ।
[च]तेने[छ]मौ च [ज]क्रतु· [झ]कर्म सनामानौ पृथक् पृथक्[२] ॥८१॥
य[ञ] दिद्यते च[ट] जातस्य[३][ठ] जातैर्यदाऽन्न[४]विद्यते ।
तेनेमौ तुल्यनामानावुभौ लोकौ समाप्नुतः[५] ॥ ९१ ॥
विसृजन्नयमेतेषां[६] [ड]भ्राजते व्योम्नि [ढ]मध्यम ।
निपातमात्रे कल्प्यन्ते[७] तथा[८]न्नेयानि कानिचित् ॥ ८२ ॥

---

(१) सक्तदिति घ० ।
(२) सनातनौ इति घ० ।
(३) यतस्येति ख०, जात सन् इति घ० ।
(४) अयेति घ० ।
(५) समश्नुता इति घ० ।
(६) सृजन्निरयमेकस्तु इति घ०, विसृज्य नयमेतेषामिति ख० ।
(७) कल्पन्ते इति घ०, कथ्यन्ते इति ग० ।
(८) तस्य इति घ० ।

---

(क) ऋ० १, २४, १३ । (ख) ऋ० ८, २७, ३ । (ग) ऋ० ४, २१, ४ । (घ) १, १७१, ४ । (ङ) ऋ० १, १०५, १६ । (च) ऋ० १, २१, ६ । (छ) ऋ० २, ४०, २ । (ज) ऋ० १, १७, ५ । (झ) ऋ० १, ३१, ८ । (ञ) ऋ० १, ४४, ६ । (ट) ऋ० १, ८६, ७ । (ठ) ऋ० ५, १५, २ । (ड) ऋ० १०, २०, ३ । (ढ) १, १६४, १ ।

(क)अर्चिभिः(ख) केश्यर्य(१) त्वग्निर्विद्युद्विशेष(२) मध्यमः ।
असौ तु(ग) रश्मिभिः(३) केशी तेनैनामाह(४) केशिनः(घ) ॥ ८३ ॥
एतेषां तु पृथक्त्वेन त्रयाणां केशिनामिह ।
संलक्ष्यन्ते प्रक्रियासु त्रयः केशिन इत्यृचि(५) ॥ ८४ ॥
न चैवैषां(६) प्रसूतिर्वा विभूतिः स्थानजन्म वा(७) ।
निर्वक्तुं शक्यमेतैर्हि कृत्स्नं व्याप्तमिदं जगत् ॥ ८५ ॥
(ङ)वैश्वानरे(८) श्रितो ह्यग्निरग्नि(९) वैश्वानरः श्रितः ।
अनयो(च)र्जातवेदाश्च तथैव(छ) जातवेदसि(१०) ॥ ८६ ॥

---

(१) अर्चिभिः केश्यर्य इति ख०, अर्चिर्भिः केश्ययमिति ङ० ।
(२) स्त्वेव इति ग० घ० ।
(३) कुरश्मिभिरिति ख० ।
(४) तेन नानाह इति घ० ।
(५) प्रक्षिप्तानि शतवर्ष वर्षींषि च इति घ० ।
(६) नत्वेवैषां इति घ० ।
(७) विभूतिस्थानजन्म वा इति ख० ग० ।
(८) वैश्वानरे इति क० घ० ।
(९) अग्नौ इति क० घ० ।
(१०) तु तयैनौ जातवेदसी इति क० ख० ग० ङ० ।

---

(क) ऋ० ५, ७८, ८ । (ख) ऋ० १०, १०२, ६ । (ग) ऋ० १, १८, ८ । (घ) ऋ० १, १६४, ४४ । (ङ) ऋ० ७, ५, ५, । (च) ऋ० १, ७७, ५ । (छ) ऋ० ६, १६, ४२ ।

सालोक्याच्चैकजातत्वाद्[१] व्याप्तिमत्त्वात्तु तैजसः[२] ।
तस्य तस्येह[३] देवत्वं दृश्यन्ते ते [४]पृथक्[५] स्तुताः ॥८७॥
यत्त्वाग्नेयमिति ब्रूमः[६] सूक्तभाक् तत्र[७] पार्थिवः ।
जातवेदस्यमित्युक्ते सूक्तेऽस्मिन् मध्यमः स्तुतः[८] ॥ ८८ ॥
वैश्वानरीयमिति तु यत्र ब्रूमो[९]ऽथ वा क्वचित् ।
सूर्यसूक्तस्य[१०] भाक्तत्र ज्ञेयो वैश्वानरस्तुतौ[११] ॥ ८९ ॥
सूर्यप्रस्तुतावग्नी तु दृष्टौ[१२] पार्थिवमध्यमौ।
एतेषामेव लोकानां त्रयाणामध्वरेऽध्वरे ॥ १०० ॥
[क]रोहात्प्रत्यवरोहेण चिकीर्षन्नाग्निमारुतम्[१३] ।

(१) एकजन्याच्चेति क० घ० ।
(२) व्याप्तिमत्त्वाच्च तेजसः इति क० घ० ।
(३) यस्य यस्येह इति क० घ०, तस्य तस्य ह इति ख० ङ० ।
(४) च इति ख० ग० ।
(५) स्तुतिम् इति घ० ।
(६) यत्त्वाग्नेयमिति ब्रूम इति ग०, यत्त्वाग्नेयमिति घ० ।
(७) सूक्तं भक्त्या तु इति क० घ० ।
(८) सूक्तं भक्त्या तु मध्यमः इति घ० ।
(९) इत्युक्ते यद्ब्रूयामो इति क० घ० ।
(१०) सूर्य्य सूक्तस्येति ग० ।
(११) सूर्यभक्तस्य सूर्यस्य ज्ञेयो वैश्वानरो दिवि इति क० घ० ।
(१२) दृष्टौ इति ख०, दृश्यौ इति क० घ० ।
(१३) चिकीर्षन्नग्निमारुतमिति ग० ।

(क) ऋ० १, ५६, २ ।

प्राक्तं[१] वैश्वानरीयेण सूक्तेन प्रतिपद्यते ॥ १०१ ॥
ततस्तु मध्यमस्थाना देवतास्तनुशंसति[२]।
इन्द्रञ्च[३] मरुतश्चैव स्तोचियेऽग्नि[४]मिमं पुनः ॥ १०२ ॥
तथैत[५]दुक्तमेतेषां विभूतिस्थानसम्भवम्।
यथा[६] च देवदेवस्य तत्र तत्रेह दृश्यते ॥ १०३ ॥
यद्यत्र पृथिवीस्थानं पार्थिवं चाग्निमिश्रितम्[७]।
तत्सर्वमानुपूर्व्येण[८] कथ्यमानं निबोधत ॥ १०४ ॥
जातवेदाः[क] श्रितो ह्य[९]ग्नि[ख]मग्निं वैश्वानरः[ग] श्रितः[घ]।

---

(१) प्राक्तमिति ग०।
(२) मध्यमे स्थानाद्देवतास्त्वनुशंससि इति ख०, देवतास्त्वच शंसति इति घ०।
(३) यदश्चेति ग०।
(४) स्तोचियाग्निमिति घ०।
(५) यथैतदिति ख० ग० घ०।
(६) तथा इति ख० ग० ङ०।
(७) वाग्निमिश्रितमिति क० घ०, वाग्निदमिश्रितमिति ङ०।
(८) आनुपूर्व्येति ग० घ० ङ०।
(९) ह्यपि इति घ०।

---

(क) ऋ० ३, ७७, ५। (ख) ऋ० १, १, १। (ग) ऋ० १, ५९, ६।
(घ) ऋ० १, ७५, ३।

द्रविणोदा[क]स्तथेध्म[ख]श्च श्रितश्चाग्निं[1] तनूनपात्[ग] ॥ १०५॥ ॥
नराशंसः[घ] श्रितश्चैन[ङ] मेन[2]मेवाश्रित[3]स्त्विलः[च] ।
बर्हिर्द्वार[छ]श्च देव्यौ[ज]ऽग्नि[4]मेन[5]मेव तु संश्रिताः ॥ १०६ ॥
नक्तोषा[झ] सा च देव्यौ[6] च होतारा[ञ]वेतदाश्रयौ[7] ।
देव्य[८]स्तिस्रः श्रितास्चैनं त्वष्टा[ट] चैवैतदाश्रयः ॥ १०७ ॥
श्रितो वनस्पति[ठ]श्चैनं[9] स्वाहाकृतय[ड] एव च ।
अश्वश्च[ढ] शकुनिश्चैव मण्डूका[ण]श्चैतदाश्रयाः[10] ॥ १०८ ॥

---

(१) चाग्निरिति घ० ।

(२) एतमेनमिति ग०, एवमेतमिति घ० ।

(३) चाश्रिता इति ख० घ० पुस्तकान्तरञ्च ।

(४) देवोऽग्निमिति ख० ।

(५) एतमिति घ० ।

(६) दैव्यौ इति ख० ।

(७) एतदाश्रितौ इति घ०, होतारौ च तदाश्रयौ इति पुस्तकान्तरं ।

(८) देव्या इति ग० ।

(९) एवमिति ख० ।

(१०) तदाश्रया इति ख० ।

---

(क) ऋ० १, १५, ७-९ । (ख) ऋ० ८, ४५, २ । (ग) ऋ० १, १८८, २ ।
(घ) ऋ० १, १४२, ३ । (ङ) ऋ० १, ९, २ । (च) ऋ० १, १२८, १ ।
(छ) ऋ० १, १३, ६ । (ज) ऋ० १, १४०, ७ । (झ) ऋ० १, १३, ७ ।
(ञ) ऋ० १०, ६५, १० । (ट) ऋ० १, ३२, २ । (ठ) ऋ० १, ९०, ८ ।
(ड) ऋ० ६, ५, ११ । (ढ) ऋ० १, ३६, ८ । (ण) ऋ० ७, १०३, ७ ।

[क]ग्रावाण[१]श्चैन[२]मद्रा[३][ख]श्च नराशंसस्तथा रथः[ग] ।
[घ]दुन्दुभिश्चेषुधि[ङ]श्चैव[४] हस्तघ्नो[च][५] भीशवो[६] धनुः[छ] ॥१०९॥
[ज]ज्या चैतदाश्रितेषुश्च[७] श्रिता अश्वाजनी[झ][८] च या ।
[ञ]वृषभो द्रुघण[९]श्चैन[ट][१०] मेतं पितुरुलूखलम्[११][ठ] ॥११०॥
नद्यश्चैवैनमापश्च सर्वाश्चौषधयस्तथा[१२] ।
रात्र्यश्चाप्य[ड]रण्यानिः[ढ][१३]श्रद्धे[ण]ला[त]पृथिवी[थ]तथा[१४] ॥१११॥

---

(१) ग्रावया इति ख०, ग्रावद्य इति ग० ।
(२) एवमिति ख०, एतमिति घ० ।
(३) मद्या इति ग० ।
(४) एनमिति ग०, एतमिति ङ०, पुस्तकान्तरश्च ।
(५) हस्तघ्नी इति पुस्तकान्तरं ।
(६) अभीशव इति पाठ सुसङ्गततया भाति ।
(७) चाश्रयेषुरिति घ० ।
(८) चाश्वाजनी इति ख०, चाश्वाजनी इति घ० ।
(९) वृषभो द्रुघण इति ग०, वृषाद्द्रुघण इति घ० ।
(१०) एनमिति ग० ङ० पुस्तकान्तरश्च, एवमिति घ० ।
(११) वृषभेद्रुघणश्चैनमेवैतं पितुमुलूखलमिति ख० ।
(१२) सर्वेति ख०, सर्वा ओषधयश्च इति ग० ङ० पुस्तकान्तरश्च ।
(१३) रात्रिरथाक्षेप्यरण्यानी इति ख०, रात्र्यश्चाप्यरण्यानी इति ग० ङ०, आदर्शपुस्तकमात्रे अरण्यानीति दीर्घस्वरान्तपाठोऽस्ति ।
(१४) श्रद्धा द्यावा पृथिव्यथेति क० घ० ।

---

(क) ऋ० १, ८९, ४ । (ख) ऋ० ९, ४३, ५ । (ग) ऋ० १, ३०, १८ ।
(घ) ऋ० १, २८, ५ । (ङ) ऋ० ६, ७५, ५ । (च) ऋ० ६, ७५, १४ ।
(छ) ऋ० ६, ७५, २ । (ज) ऋ० ६, ७५, ३ । (झ) ऋ० ५, ६२, ७ ।
(ञ) ऋ० १, ३१, ५ । (ट) ऋ० १०, ९५, १८ । (ठ) ऋ० १, २८, ६ ।
(ड) ऋ० ५, ४६, ८ । (ढ) ऋ० १०, १४६, २ । (ण) ७, ३२, १४ ।
(त) ऋ० १, १३, ९ । (थ) ऋ० १, २२, १३ ।

भजते चैन[१] मेवोर्व्वी[क][२] द्वन्द्वभूते च रोदसी[ख][३] ।
मुषलोलूखले[ग] चैनं[४] हविर्धाने च ये स्तुते ॥११२॥
जोष्ट्री[५]चोर्जाहुती[घ] चैनं[६] शुतुद्र्या[७][ङ] च विपाट्[च] सह ।
यौ च देवौ शुनासीरौ[छ][८] तौ चाग्नी चैतदाश्रयौ[९] ॥११२॥
लोके वै[१०] यच्च वै प्रातः सवनं[ज] क्रियते मखे[झ] ।
वसन्त[ञ]शरदौ[ट] चर्तू स्तोमो[ठ]ऽनुष्टुबथो[ड] त्रिवृत्[ढ][११] ॥११४॥

---

(१) चैवमिति ख०, भजेते चैतमिति क० घ०, भजेते चैनमिति ङ० ।
(२) एवार्वी[ख] इति क० ग० घ० ।
(३) तु मेदष्मा इति ख० ।
(४) एवेति क० घ० ।
(५) जोष्ट्रा इति ख० ।
(६) चोर्जाहुतिश्चैनमिति ख०, एवेति क० घ० ।
(७) सुतुद्र्या इति ख० ।
(८) सुनासीरौ इति ख० ।
(९) चैवाथैतदाश्रयौ इति क० घ०, चाग्नि चैतदास्तथेति ख० ।
(१०) लोकोऽयमिति क०ग० घ० ङ० ।
(११) च यस्त्रिवृत् इति क० घ० ।

---

(क) ऋ० १, १४, ९ । (ख) ऋ० १, १६७, ५ । (ग) ऋ० १, २८, ६ ।
(घ) ऋ० ८, ९९, ४ । (ङ) ऋ० ३, ३३, १ । (च) ऋ० ३, ३३, १ ।
(छ) ऋ० ४, ५७, ५ । (ज) ऋ० १, १६, ५ । (झ) ऋ० १, ६, ८ ।
(ञ) ऋ० १०, ९०, ६ । (ट) ऋ० १, ७२, ३ । (ठ) ऋ० १, ८, १० ।
(ड) ऋ० १, २८, ६ । (ढ) ऋ० १, १४०, २ । (ण) ऋ० ६, ७५, ४ ।

गायत्री[क] चैकविंशश्च यच्च साम[ख]रथन्तरम्[१][ग] ।
माध्याः[घ] साम च वैराजमाग्न[ङ]श्च वसुभिः[च][२] सह ॥११५॥
इन्द्रेण च मरुद्भिश्च सोमेन वरुणेन च ।
पर्ज्जन्येनर्त्तुभिश्चैव विष्णुना चास्य संस्तवः ॥११६॥
अस्यैवाग्नेस्तु पूष्णा च[३] माधाच्यं वरुणेन च ।
देवता वाहनश्चैव[४] हविषां[५] वहनं तथा ॥११७॥
देवतामर्थतत्त्वज्ञो मन्त्रैः संस्तुयते[६]हविः[७] ।
अमन्त्रतस्या[८]पि सतो[९] हविरेकं[१०] निरूप्यते ॥११८॥
कर्म दृष्टे च[११] यत् किञ्चिद्[१२] विषये[१३] परिवर्त्तते ।

---

(१) साथं रथन्तरमिति ख० ।
(२) आग्नश्च वसुभिरिति ख०, आग्नाश्च वसुभिरिति ग० घ० ङ० ।
(३) पुष्णश्चेति ख०, पुष्णा चेति ङ० पुस्तकान्तरञ्च ॥
(४) अपि इति क० घ० ।
(५) हविष इति क० घ० ।
(६) संयोजयेदिति क० घ० ।
(७) विदुरिति ख० ।
(८) असंस्कृतस्येति क० घ० ।
(९) विनत इति घ० ।
(१०) एषा इति ख०, एवमिति ग० ।
(११) तु इति क० घ०, कर्म्म दृष्टेष्विति ङ० पुस्तकान्तरञ्च ।
(१२) य कश्चिदिति क० घ० ।
(१३) विकथे इति ख०, विषये इति ङ० ।

---

(क) ऋ० १०, १४, १६ । (ख) ऋ० १,६२,२ । (ग) ऋ० १०,१८१,१ ।
(घ) ऋ० १, १६४,५० । (ङ) ऋ० १, १०५, ९ । (च) ऋ० १, ५८, ३ ।

इत्युक्तोऽयं गणः सर्वः पृथिव्यन्याश्रयो महान् ॥११८॥
यश्चेन्द्रो[१] मध्यमस्थानो गणः सोऽयमतः परः।
विमानानि च दिव्यानि गन्धर्व्वाप्सरसां[२]तथा ॥१२०॥
इन्द्राश्रयस्तु[३] पर्ज्जन्यो रुद्रो वायुर्बृहस्पतिः।
वरुणः कश्च मृत्युश्च देवश्च ब्रह्मणस्पतिः[क] ॥१२१॥
मन्यु[४]श्च विश्वकर्मा च मित्रः क्षेत्रपति[५]र्यमः।
तार्क्ष्यो वास्तोष्पतिश्चैव सरस्वांश्चैवमत्र ह[६] ॥१२२॥
अपानपाद्दधिक्रा[ख]श्च[७] सुपर्णो[ग]ऽथ पुरूरवाः[घ]।
असतो[ङ]ऽसुनीति[च]र्वेन[छ]श्च[८] तयेन्दुश्च स्त्रियो दितिः[ज] [९] ॥१२३॥

---

(१) चेन्द्रः इति क॰ घ॰।
(२) गन्धर्व्वाप्सरसः इति क॰ घ॰, गणश्चाप्सरसामिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(३) इन्द्रश्च यस्तु इति क॰ घ॰।
(४) मनुरिति ख॰ ङ॰।
(५) मित्रक्षेत्रपतिरिति ख॰ ग॰।
(६) तत्र तु इति क॰ घ॰।
(७) अपान्नपाद्दधिक्रा चेति क॰ घ॰ ङ॰, अपान्नपादधिकाश्चेति ग॰।
(८) वैनश्चेति घ॰।
(९) तस्यैतस्याश्रये दिति इति क॰ घ॰, तथादुश्च स्त्रियो दितिरिति ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ २, २४, २। (ख) ऋ॰ ४, ३८, ९। (ग) ऋ॰ १, ३५, ७।
(घ) ऋ॰ १, ३१, ४। (ङ) ऋ॰ ८, ९०, ५। (च) ऋ॰ १०, १२, ४।
(छ) ऋ॰ १, ८३, ५। (ज) ऋ॰ ७, १५, १२।

त्वष्टा[क] च सविता चैव वातो[ख][१]वाचस्पतिस्तथा ।
धाता प्रजापतिश्चैव अथर्वाण[ग]श्च[२] ये स्मृताः ॥१२४॥
भृगव[घ]श्चैवमग्निश्च[३] तथेला[ङ] चैव याः स्मृताः ।
विधातेन्दुरहिर्बुध्न्यः [च]सोमोऽहिरथ चन्द्रमाः ॥१२५॥
विश्वानर[छ]श्च वै[४]देव ऋभूणां[ज] संस्तुतो[५] गणः ॥१२६॥
मरुतोऽङ्गिरसश्चैव पितरस्त्वर्तुभिः सह ।
राका[झ][६]वाक्[ञ]सरमा[ट]श्रद्धा[ठ]श्च[७]भृगवो[ड]ऽश्वा सरस्वती॥१२७॥
यम्यु[ड]र्वशी[ढ]सिनीवाली[ण] पथ्या[त] स्वस्ति[थ]रुषाः कुहूः ।

---

(१) वाचः इति क० घ० ।
(२) वाथर्व्वाणश्चेति ख० ।
(३) श्येनश्चैवैवमापश्चेति ख० घ० ।
(४) चैवेति ख० पुस्तकान्तरञ्च ।
(५) रुद्राणां चाश्रित इति क० घ० ।
(६) एका इति क० ।
(७) वाक्सरमाद्येति ङ० ।
(८) यम्भुरिति ख० ।

---

(क) ऋ० १, ३२, २। (ख) ऋ० १, २८, ६। (ग) ऋ० ९, ११, २।
(घ) ऋ० १, ५८, ६। (ङ) ऋ० १, १३, ९। (च) ऋ० १, १८६, ५।
(छ) ऋ० १, १८६, १। (ज) ऋ० ४, ३५, २। (झ) ऋ० २, ३२, ८।
(ञ) ऋ० १, १६४, ४५। (ट) ऋ० १, ६२, ३। (ठ) ऋ० १, १०५, ९।
(ड) ऋ० १, ५८, ६। (ढ) ऋ० १, १०१, ४। (ण) ऋ० २, ३२, ८।
(त) ऋ० ३, ५४, ५। (थ) ऋ० ३, ८९, ६।

पृथिव्यनुमतिर्धेनुः सीते(क)ला(ख)ख्या तथैव(१) गौः ।
गौरी(ग) च रोदसी(घ) चैव इन्द्राण्या(२)श्चैव वै पतिः ॥१२८॥
छन्दस्त्रिष्टुप् च पङ्क्ति(ङ)श्च लोकानां मध्यमश्च यः ।
एतेष्वेवाश्रयो(३)विद्यात्सवनं(च) मध्यमञ्च यत् ॥१२९॥
ऋतू च ग्रीष्महेमन्तौ यच्च सामोच्यते(४) बृहत् ।
शक्करीषु(छ) च यद्गीतं नाम्ना तत्साम शाक्करम् ॥१३०॥

इति बृहद्देवतायां प्रथमोऽध्यायः ।



(१) श्रीलाक्षेषा दितिश्चेति क० घ०, सीतालाक्षा तथैवेति ख० ग०।
(२) चैवेन्द्रायण्याः इति ख० ।
(३) एकस्यैवाश्रयः इति क० घ०, थाश्रये इति ख० पुस्तकान्तरञ्च।
(४) साम्भोच्यते इति ख० ।

(क) ऋ० ४, ५७, ७ । (ख) ऋ० १, १२८, ७ । (ग) ऋ० ९,१२,३ । (घ) ऋ० १, १६७,५ । (ङ) ऋ० १०, ११०, ८ । (च) ऋ० १, १६, ५ । (छ) ऋ० ७, ३३, ४ ।

# अथ द्वितीयोऽध्यायः।



आह चास्यैव तौ(१)सोमा(क)वाग्नयौ शाकटायनः(२)।
यस्य(३) पञ्चदशे नाम्ना सञ्ज्ञया(४) त्रिणवस्य(५) यः ॥१॥
संस्तुत(६)श्चैव पूष्णा च विष्णुना वरुणेन च।
सोमवाय्वग्निकुत्सैश्च ब्रह्मणस्पतिनैव च ॥२॥
बृहस्पतिना च तथा(७) बृहत(ख)श्चैव वै पतिः(८)।
कासुचित्(९) केचिदित्याहुर्निपाताः(ग) स्तुतिषु स्तुताः(१०) ॥२॥

---

(१) द्यौ इति ख० ग० ङ०।
(२) भाकटायन इति क० घ०।
(३) यस्येति ख०।
(४) सञ्ज्ञायामिति क० घ०।
(५) त्रिनव इति दन्त्यनकारयुक्तपाठो विशुद्धः।
(६) संस्तृत इति क० घ०।
(७) स बृहस्पतिना चैव इति ख०, बृहतस्पतिना चैवेति ग० ङ०।
(८) नाम्ना यस्यापि पर्व्वत (घ) इति ख० ग० ङ० पुस्तकान्तरेषु।
(९) कश्चित्स इति क० घ०।
(१०) निपाताः स्तुतिषु स्तुत इति क० घ०।

---

(क) ऋ० १, ८, १०। (ख) ऋ० १, १३०, ९। (ग) ऋ० ४,५५,३।
(घ), ऋ० १, ३७, ५।

मित्र(क)श्च(१) स्तूयते(२)देवो वरुणेन महा:(३)(ख)सह ।
रुद्रेण सोमः पूष्णा(४) च पुनः पूषा च वायुना ॥४॥
वातेनैव तु(५) पर्जन्यो लक्ष्यते वै क्वचित्(६) क्वचित् ।
ऋच्च(ग)र्द्धर्चेषु(७) पादेषु सूक्तेष्वेषु तु(८) लक्षणः ॥५॥
रसादानं(९) तु कर्मास्य वृत्रस्य(१०)(घ) च निबर्हणं ।
स्तुतेः प्रभुत्वं सर्वस्य बलस्य(ङ) निखिला कृतिः ॥६॥
इत्यैन्द्रो मध्यमस्थानो गणः सम्यगुदाहृतः ।
यः परस्तु(११)गणः सौर्यो द्युस्थानस्तं निबोधत ॥७॥

---

(१) तु इति ख० ङ० पुस्तकान्तरञ्च ।
(२) श्रूयते इति ग० ङ० पुस्तकान्तरञ्च ।
(३) सर्व्वेषु आदर्शपुस्तकेषु, सहा इति निर्व्विसर्गपाठो वर्त्तते ।
(४) पूषा इति ख० ।
(५) चैव इति ख० ङ० । चेति ग० ।
(६) अन्यत्र वै इति ग० ङ० पुस्तकान्तरञ्च ।
(७) अर्धर्चेष्वृक्षु इति क० घ०, ऋच्चवर्द्धेषु इति ख०, ऋच्चार्द्धर्चेषु इति ग० ।
(८) सूक्तेष्वेव त्विति क० घ०, सूक्तेष्वेतेषु इति पुस्तकान्तरं ।
(९) रसदानमिति क० घ० ।
(१०) पुत्रस्येति क० घ० ।
(११) यश्च यस्तु इति क० ।

---

(क) ऋ० १, २३, ६ । (ख) ऋ० ८, २०, २० । (ग) ऋ० ५,५६,३ । (घ) ऋ० १, ३२, १० । (ङ) ऋ० १, ३०, १२ ।

तस्य मुख्यतमौ देवावश्विनौ[1]सूर्य्यमाश्रितौ ।
वृषाकपायि[2][क] सूर्य्यो[ख]षाः[ग] सूर्य्यस्यैव तु पत्नयः[3] ॥८॥
अमुतोर्वाङ्[4]निवर्त्तन्ते प्रतिलोमास्तदाश्रयाः[5] ।
पुरोदया[6]त्तामुषसं सूर्य्यां मध्यन्दिने स्थिते ॥९॥
वृषाकपायिं[2] सूर्य्यास्तकाल आहुः[7] स्तुनिम्रुचि[8] ।
तस्या[9]श्रये[10]सरण्यूश्च[घ][11] भगः[ङ] पूषा वृषाकपिः[च][12] ॥१०॥

---

(१) त्वश्विनौ इति क॰ घ॰ ।
(२) सर्व्वेषु आदर्शपुस्तकेषु वृषाकपायी इति दीर्घस्वरान्तपाठो वर्त्तते ।
(३) पत्नय इति क॰, यत्नतः इति ख॰ ।
(४) अमुतोर्वागिति ङ॰ पुस्तकान्तरस्य । अमुतो वागितिपाठः शुद्धः ।
(५) प्रलोदये इति क॰ घ॰ ।
(६) पुरोदये इति क॰ घ॰ ।
(७) सूर्य्यस्य तामेवाहुरिति क॰ घ॰, सूर्य्यस्य स्तानेवाहुरिति ख॰ ।
(८) तु निम्रुचि इति क॰, निमुचि इति ख॰ ।
(९) अस्येति क॰ घ॰ ।
(१०) आश्रमे इति ग॰ ।
(११) तस्याएस्येति ख॰ ।
(१२) बृहस्पतिरिति ख॰ ।

---

(क) ऋ॰ १०, ८६, १३ । (ख) ऋ॰ ५, ७३, ५ । (ग) ऋ॰ १, ४६, १ ।
(घ) ऋ॰ १०, १७, २ । (ङ) ऋ॰ १, २४, ४ । (च) ऋ॰ १०, ८६, १ ।

यमो वैश्वानरो(क) विष्णुर्वरुणश्चैकपादजः[1] ।
पृथिवी च समुद्राश्च देवाः सप्तर्षयश्च ये ॥११॥
आदित्याः केशिसाध्याश्च सविता[2] वसुभिर्मनुः ।
दध्यङ्(ख)यर्वा(ग) विश्वे(घ) च वाजिनो(ङ)[3]देवपत्नयः ॥१२॥
असौ तृतीयं सवनं[4] लोकः साम च[5] रैवतं ।
वैरूपश्चैव वर्षाश्च[6] शिशिरोऽथ ऋतुस्तथा[7] ॥१३॥
त्रयस्त्रिंशश्च[8]यः स्तोमः(च)[9] कृधा सप्तदशश्च यः ।
छन्दश्च जगतीनाम्ना[10] तथाऽतिच्छन्दसश्च[11]याः[12] ॥१४॥

(१) अथ पादजः इति क० घ० ।
(२) आदित्यपूगः साध्याश्च साद्र्धश्चेति क० घ० ।
(३) वाजिनौ इति ख० ।
(४) तृतीयसवनमिति क० घ० ।
(५) तृतीयः सर्व्वेन लोमसामा चेति ख० ।
(६) वैरूप्यश्चैव मर्याश्चेति ख० ।
(७) शिशिरश्चैव यावतू इति क० घ० ।
(८) त्रयस्त्रियश्चेति ख० ।
(९) यत् स्तोमं इति क०घ० ।
(१०) चैवेति क० घ० ।
(११) अतिश्छन्दसाश्चेति ग०, अतिच्छन्दसाश्चेति क० ख० घ० ।
(१२) यदिति क० घ० ।

(क) ऋ० १, ५९, ६ । (ख) ऋ० १, ८०, १६ । (ग) ऋ० १, ८०, १६ ।
(घ) ऋ० १, ३, ७-९ । (ङ) ऋ० १, ११, २ । (च) ऋ० १, ८, १० ।

पौरुषश्चाक्षरस्यैतत्सर्वमेव तु[१] पौरुष ।
एतस्यैव तु विज्ञेया देवा सत्त्विका[२]स्त्रय[३] ॥१५॥
चन्द्रमाश्चैव वायुश्च पञ्चमं वत्सर[४] विदु ।
केचित्तु निर्वपत्य[५]स्य सौर्य्यं वैश्वानर हवि ॥१६॥
सौर्य्यवैश्वानरीयं हि तत् सूक्ष्ममिव[६]दृश्यते ।
ऋगर्द्धर्चोऽथ[७]वा पादो दृचो वा यदि वा तृच ॥१७॥
अनेन तु प्रवादेन[८] दृष्टा मूर्द्धन्वतास्तुति ।
सूर्य्यवैश्वानराग्नीना[९] मैकात्म्यमिह दृश्यते ॥१८॥
हरण तु रसस्यैतत्कर्मणाऽमुच[१०]रश्मिभि ।
यानीमानि च पश्यन्ति सर्वभूतानि तेजसा[११] ॥१९॥

---

(१) हेति ख० ।
(२) सत्त्वात्मिका इति क० घ० ।
(३) तये इति ख० ।
(४) यच्च संवत्सरमिति क० घ०, पञ्चसंवत्सरमिति ख० ।
(५) निर्व्वपते चेति क० घ० ।
(६) न सूक्ष्ममिहेति क० घ० ।
(७) ऋगर्द्धर्चश्चेति क० घ०, ऋगवर्द्धर्चायेति ख० ।
(८) प्रयोगेणेति क० घ०, प्रमादेनेति ख० ।
(९) सौर्य्यवैश्वानराग्नीनामिति क० ख० घ० पुस्तकान्तरञ्च ।
(१०) रश्मिभिश्चास्य कर्म्माऽमुत्र चेति ग० ङ० पुस्तकान्तरञ्च ।
(११) येन नातिविजानन्ति सूर्य्यभूतानि चक्षुषेति ख० ग० ङ० पुस्तकान्तरञ्च ।

विभागमिममेतेषां विभूतिस्थानसम्भवं ।
सम्यग्विज्ञाय[१]मन्त्रेषु तन्तु[२]कर्मसु योजयेत् ॥२०॥
अध्यापयन्नधीयानो मन्त्र[३]श्चैवानुकीर्तयन् ।
स्थानं सालोक्यं सायुज्यमेतेषामधिगच्छति[४] ॥२१॥
अग्नेस्तु यानि सूक्तानि[५] पञ्च नामानि कारवः[क] ।
षड्विंशतिस्तथेन्द्रस्य प्राहुः सूर्यस्य सप्त च ॥२२॥
तेषां पृथग्निर्वचनमेकैकस्येह कर्मजं ।
उच्यमानं यथान्यायं शृणुध्वमखिलं मया ॥२३॥
जातो यद्रूपे भूतानामपणीरध्वरे च यत् ।
नाम्ना सञ्चयते वाङ्गं[६] स्तुतोऽग्निरिति[०]सूरिभिः[ख] ॥२४॥
द्रविणं[ग] धनं वलं वापि प्रायच्छद्येन[८] कर्मणा।

---

(१) विज्ञानन्निति क० घ० ।
(२) तास्वेति क० घ० ।
(३) सत्तु इति क० घ० ।
(४) एव गच्छतीति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) सूक्तेषु इति क० घ० ।
(६) सन्तिष्ठते चाग्ने इति क० घ० ।
(७) इहेति क० घ० ।
(८) चैव प्रयच्छेद्येनेति क० घ० ।

---

(क) ऋ० १, ११, ६ । (ख) ऋ० १,५१,१५ । (ग) ऋ० १,९४,१४ ।

तत्कर्म दृष्ट्वा[1] कुत्स[क]स्तु प्राहैनं द्रविणोदसं[ख] ॥२५॥
अयं तनूनपाद[ग]ग्निरसौ हि तननात्तनुः[२][घ]।
ततस्तु मध्यमो यज्ञे स्थानेऽयं[३] मध्यमात्तत[४] ॥२६॥
अनन्तर[५] प्रजामाकर्नपा[ङ]दिति छपथ्यवः।
नपादमुष्य[६] चैवायमग्निस्तेन तनूनपात् ॥२७॥
पृथक्केन समत्वेन[७] यज्ञे यष्क्रास्यते[८] नृभिः।
स्तुवन्त्यासीषु तेनेमं नराशंस[च]न्तु कारवः[९][छ] ॥२८॥
पुनाति[१०] यदिदं विश्वमेवाग्निः[११] पार्थिवोऽय च[१२]।

---

(१) ज्ञात्वेति क० घ०।
(२) तपसा तनूरिति क० घ०।
(३) स्थानोऽयमिति ख०।
(४) यज्ञे यस्यैव मध्यमादिति क० घ०।
(५) अनन्तरामिति ङ० पुस्तकान्तरञ्च।
(६) अमुष्येति ख०।
(७) समासैष्विति ख० ग० ङ० पुस्तकान्तरञ्च।
(८) वास्यते इति क० ख०।
(९) सूरयः इति क० घ०।
(१०) जानाति इति ख०।
(११) विश्वमेधाग्निरिति ख०।
(१२) पार्थिवोऽप्यचेति ख०।

---

(क) ऋ० १, १०६, ६। (ख) ऋ० ६, ८८, ३। (ग) १, १८८, २।
(घ) ऋ० १, १२०, ११। (ङ) ऋ० १, १४३, १। (च) ऋ० १, १३, ३।
(छ) ऋ० १, ११, ६।

वैखानसर्षिभि[१] स्तेन पवमान[क] इति स्तुतः[२] ॥२८॥
भूतानि वेदयञ्जातो जातवेदाऽथ[ख]कथ्यते[३]।
यद्वैष[४]जातविद्यो[५]ऽभूद्वित्वा[६]जातोऽधिवेत्ति[७] वा ॥३०॥
विद्यते सर्वभूतैर्हि[८] यद्वा जातः[९] पुनः पुनः।
तेनैष मध्यभागिन्द्रो[ग][१०] जातवेदा इति स्तुतः ॥३१॥
पुनाति यदिदं विश्वं ह्येषोऽग्निः[घ] पार्थिवोऽपि सन्।
वैखानसाश्रितैस्तस्मात्पवमान इति स्तुतः[११] ॥३२॥

---

(१) वैखानस ऋषिरिति ख०।
(२) पुनातीत्यादि पवमान इति स्तुतः इत्यन्तपाठः क० घ० पुस्तकयोर्नास्ति।
(३) जातैर्यद्वाऽथ विद्यते इति क० घ०।
(४) यद्वेष इति क० घ०।
(५) जातं वेदः इति क० घ० पुस्तकान्तरेषु।
(६) वित्तमिति ख० ग० ङ०।
(७) थय वेत्तीति क० घ०।
(८) सर्व्वमेतद्धीति क० घ०।
(९) जातामिति क० घ०।
(१०) मध्यमागेन्द्र इति ख० ग०।
(११) एष श्लोकः ख० ग० ङ० पुस्तकेषु पुस्तकान्तरे च न विद्यते।

---

(क) ऋ० ८, १०१, १४। (ख) ऋ० १, ७७, ५। (ग) ऋ० १, २, ५। (घ) ऋ० १, १, २।

अग्निष्ठ एष(१) यत्तु क्षीन्(२)व्याप्यैको व्योम्नि तिष्ठति ।
तेनैनमृषयोऽर्चन्त.(३) कर्मणा वायु(क)मब्रुवन् ॥२३॥
क्षौणीमान्यावृणोत्येको(४)मूर्त्तेन तु रवेन यत् ।
तथैनं वरुणं(ख) प्राहुः स्तुतिष्वाहुः सपर्यवः(५) ॥२४॥
अरोदीद(६)न्तरिक्षे यद्विद्युद्वृष्टिं ददन्नृणां(७) ।
चतुर्भिर्ऋषिभिस्तेन रुद्र(ग) इत्यभिसंस्तुतः(८) ॥२५॥
चतुर्विधानां भूतानां प्राणो भूत्वा व्यवस्थितः ।
इष्टे चैवास्य सर्वस्य तेनेन्द्र इति स स्तुतः(९) ॥२६॥
इरां(घ) दृणाति(१०) यत्काले मरुद्भिः सहितोऽम्बरे ।

---

(१) अनिरुद्धयैवेति क० घ० ।
(२) यस्मा इति क०, यत्तु क्षीमिति ख० ङ०, यत्तस्मा इति घ० ।
(३) अर्चन्ते इति ख० ग० ङ० पुस्तकान्तरेषु ।
(४) क्षौनिमामावृणोक्षोकानिति क० घ० ।
(५) तु कारव इति क० घ० ।
(६) रोदस्यमिति क० घ० ।
(७) विद्युद्वृष्टिर्ददान्नृणामिति क० घ० ।
(८) अभिधीयते इति क० घ० ।
(९) एष श्लोकः क० घ० पुस्तकयोर्नास्ति ।
(१०) इरा ददातीति क० घ० ।

---

(क) ऋ० ५, ४१, ६ । (ख) ऋ० १, २, ७ । (ग) ऋ० १, ४३, ३ ।
(घ) ऋ० ५, ८३, ४ ।

रवेण महता युक्तस्तेनेन्द्रमृषयोऽब्रुवन् ॥३७॥
यदिमां मार्जयत्ये[१]को रवेणाम्बरजेन गां ।
कालेऽब्दिरौर्वभस्वर्षी[२]तेन पर्जन्य[क]माहतुः ॥३८॥
तर्पयत्येष यल्लोकान् जन्यो जनहितश्च यत् ।
परो[३]जेता जनयिता यदाग्नेयस्तुतो[४]जगौ[५] ॥३९॥
बृहन्तौ पाति यल्लोकावेष द्वौ मध्यमोत्तमौ ।
बृहता[६]कर्मणा तेन[७] बृहस्पति[ख] रितीडितः[८] ॥४०॥
ब्रह्म वाक् ब्रह्म सत्यञ्च ब्रह्म सर्व्वमिदं जगत् ।
पातारं ब्रह्मणस्तेन शौनहोत्रः स्तुवन् जगौ ॥४१॥
त्वर्पां[ग][९] चितिभ्यो विदधद्दृतुथ्यविशत् क्षितौ[१०] ।

(१) मार्जयतीति क॰ घ॰ ।
(२) वार्षी इति क॰ घ॰ ।
(३) पुरः इति ख॰ ।
(४) चाग्नेयस्तस इति ख॰ ग॰ ।
(५) एष श्लोकः क॰ घ॰ पुस्तकयोर्न दृश्यते ।
(६) बृहन्तीति ख॰ ।
(७) चैवेति क॰ घ॰ ।
(८) बृहतश्चैव वै पतिरिति क॰ घ॰ ।
(९) चन्तमिति ग॰ ।
(१०) ब्रह्मवागित्यादि त्वविशत् क्षितौ इत्यन्तपाठः क॰ घ॰ पुस्तकयोर्न्नास्ते ।

(क) ऋ॰ ५, ५३, ६ । (ख) ऋ॰ १, ६२, ३ । (ग) ऋ॰ ३, ७८, ४ ।

न कुत[१]श्चैव[२] यद्दीनो हला[क] तिष्ठति मध्यमः ।
राहूगण ऋषिस्तेन प्राहैनं गौतमो[३] द्विति[ख] ॥४७॥
प्रजाभ्यस्त्वेष यच्छक्ता एष वीरः शिवः सुखः[४] ।
हिरण्यगर्भे[ग] स्तेनैनमृषिरर्चतु[५]वाचकम् ॥४८॥
इह प्रजाः प्रयच्छेति[६] सङ्गृहीता[७] प्रयाति[८] च ।
ऋषिर्विवस्वतः पुत्रं तेनाहैनं पुन[९] र्यमं[घ] ॥४९॥
मित्रीकृत्य जना विश्वे यदिमं[१०] पर्य्युपासते ।
मित्र[ङ] इत्याह तेनैनं विश्वामित्रः[च] स्तुवन् स्वयम् ॥५०॥
निदाघमासानिगमे यदृते नावति क्षितिम्[११] ।

---

(१) नकुनः इति ख०, न ऊतः इति ङ० ।
(२) एष इति क० घ० ।
(३) गौतम इति क० घ० ।
(४) प्रजाभ्यस्त्वेष यच्छर्म्मकमिच्छन्मनसा सखम् इति ख० ग० ।
(५) स्व त्विति ख०, इच्छन्नु इति ग० ङ० पुस्तकान्तरस्य ।
(६) प्रयच्छन् स इति ख० ग०, नियच्छन्निति क० घ० ।
(७) सङ्गृहीतेति ग० ङ०, पुस्तकान्तरस्य ।
(८) सङ्गृहीताद्य याति इति घ० ।
(९) यमः इति क० घ० ।
(१०) मैत्रं ह्यथैजना विश्वे यदेते इति क० घ०, यदिमे इति ख० ।
(११) यदि मेनावर्त्तीक्षितमिति क० घ०, यदतेना च निक्षति इति ख० ।

---

(क) ऋ० १०, ९०, १ । (ख) ऋ० ४, २, ११ । (ग) ऋ० १०, १२१, १ ।
(घ) ऋ० १, ७३, १० । (ङ) ऋ० १, २१, ६ । (च) ऋ० ३, ५९, ८ ।

विश्वस्य जनयन् कर्म विश्वकर्मा[क]च तेन सः[१] ॥५१॥
सरांसि घृतवन्त्यस्य सन्ति लोकेषु यत्त्रिषु ।
सरस्वन्त[ख]मिति प्राह वाचं प्राहुः सरस्वतीम्[ग][२] ॥५२॥
प्राणभूतस्तु भूतेषु यद्वितत्येह[३] तिष्ठति ।
तेनैनं वेन[घ]माहर्षिर्वेनो[ङ]नामेह[४] भार्गवः ॥५३॥
ससृजे मासि मास्येनमभिमत्य[५]ततो भजन्[६] ।
तेनैनं मन्यु[च]रित्याह मन्युरेव तु तापसः ॥५४॥
यदन्तकाले भूतानामेक[७] एव नयत्यसून् ।
तेनासुनीति[छ]रुक्तोऽयं स्तुवता श्रुतबन्धुना ॥५५॥
निदाघमासातिगमे जन्म मध्ये भवत्यपां[८] ।
नप्तार[ज]माह तेनैनमृषिर्गृत्समदः[झ]स्तुवन्[९] ॥५६॥

---

(१) त्विति क॰ घ॰ ।
(२) इतीमन्तु ब्रूतो दीर्घतमौर्वशौ इति क॰ घ॰ ।
(३) यद्वेनत्येष्विति ग॰, यद्वेनत्येन्द्विति ङ॰ पुस्तकान्तरस्थ ।
(४) व्याहार्षिन् वेनोऽन्यमेहेति क॰ घ॰ ।
(५) अभिवत्येति ख॰, अभिपत्येति ग॰ ।
(६) मासि मासीमामभितप्य तपोऽयशः इति क॰ घ॰ ।
(७) एष इति क॰ घ॰ ।
(८) मध्येऽस्य यत्त्वपामिति क॰ घ॰ ।
(९) स्वपामिति क॰ घ॰ ।

---

(क) ऋ॰ ८, ९८, २ । (ख) ऋ॰ १, १६४, ५२ । (ग) ऋ॰ ६, ६१, २ ।
(घ) ऋ॰ ९, २१, ५ । (ङ) ऋ॰ १, ८३, ५ । (च) ऋ॰ २,२४,१४ ।
(छ) ऋ॰ १०, १२, ४ । (ज) ऋ॰ २, ३५, १४ । (झ) ऋ॰ २,१९,८ ।

अपा(१)मम्बरगर्भांयमादधत्(२)सोऽष्टमासिकम् ।
यत्क्रन्दत्य(३) सकन्मध्ये दधिक्रेति तदोच्यते(४) ॥ ५७ ॥
मासेन सम्भृतं गर्भं नवमेनाथ मासिकम्(५) ।
स्वयं क्रन्दन् दधात्युर्व्वीं धातेत्यृग्भिः स(६) गीयते ॥ ५८ ॥
स्तीर्णेऽन्तरिक्षे क्षिपति यद्वा तूर्णं चरत्यसौ(७) ।
अरिष्टनेमिस्तार्क्ष्य(क)पिस्तार्क्ष्यं तेनैन(८)मुक्तवान् ॥ ५९ ॥
रुवन्(ख) व्योमुदयं याति क्रन्दन् भा(९)दिष्टजन्नपः ।
पुरूरवस(ग)माहैनं स्ववाक्येनोरु(घ)वासिनी(१०) ॥ ६० ॥

---

(१) रथ्यामिति क० घ० ।
(२) आदरदिति क० घ० ।
(३) यत्कन्दते इति क० घ० ।
(४) दधिकास्तेन कथ्यते इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) अष्टमासिकमिति क० घ० ।
(६) तु इति क० घ० ।
(७) तूर्णं क्षिपं सप्तसखा यदिपातीव धन्विनीति क० घ०, तूर्णं क्षिप-सप्तसखो यदियति धन्वनीति ख०, करोत्यसौ इति ङ० पुस्तका-न्तरञ्च ।
(८) एवमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) कान्तमादिति ग० ।
(१०) स्ववाक्यैरवशाद्मिनीति क० घ० ।

---

(क) ऋ० १, ८९, ६ । (ख) ऋ० १, १७१, ९ । (ग) ऋ० १, ३१, ४ ।
(घ) ऋ० १०, ९५, ७ ।

यत्तु प्राच्या वयं नेति[१] घोषेण महता वृतः[२]।
येमं चितिभ्यो विदधदयत्तुष्यविश्रत् चितौ[३] ॥६१॥
तेन मृत्युमिमं मन्त्रं स्तौति मृत्युरिति स्वयं[४]।
नाम्ना सङ्कुसुको[५] नाम यमपुत्रो जघन्यजः[६] ॥६२॥
संवर्तयंस्तमः सूर्य्या[७] दुपसञ्च प्रवर्तयन्।
दिवाकरः प्रसौत्येकः[८] सविता तेन कर्म्मणा ॥६३॥
उदितो भासयल्लोका[९] निमांश्चैव स्वरश्मिभिः[१०]।
स्वयं वसिष्ठस्तेनैनमप्यपिराह स्तुवन् भगम्[११](क) ॥६४॥

---

(१) नेतीति क० घ०।
(२) मृधे इति क०, मृतः इति ख०, मृधमिति घ०।
(३) एतच्छ्लोकार्द्धं ग० ङ० पुस्तकयोर्नास्ति। चयच्चितिभ्यो विरजत् यत्तु+स्वविश्र चितौ इति ख०, चविवच्चितौ इति क० घ०।
(४) इतोभ्यवरमिति क० घ०।
(५) सङ्कुसुमः इति क०।
(६) जघन्यसः इति ख०, जघन्यकः इति ङ०।
(७) स्वं वर्त्तयंस्तमो सूमौ इति क० घ०, संवर्त्तयं तमः सूर्य्यादिति ख० ग० ङ०।
(८) दिवा चरन् प्रसूत्यैकः इति क० घ०।
(९) भाति यल्लोकानिति क० घ०।
(१०) चैकस्य रश्मिभिरिति ख० ङ० पुस्तकान्तरयः।
(११) स्तुवन्नगमिति ग०।

---

(क) ऋ० १, १४, ३।

पुष्यन् क्षितिं[१] पोषयति प्रणुदन् रश्मिभिस्तमः[२] ।
तेनैनमस्तौत् पूषेति भरद्वाजस्तु षड्भिः ॥ ६५ ॥
त्रीणि भान्ति रजांस्यस्य यत्पदानि तु तेजसा[३] ।
तेन मेधातिथिः प्राह विष्णु[क]मेनं[४] त्रिविक्रमम् ॥ ६६ ॥
हृत्वा सायं पृथग्याति[५] भूतेभ्यस्तमसोऽत्यये ।
प्रकाशं किरणैः कुर्वंस्तेनैनं केशिनं[ख] विदुः ॥ ६७ ॥
सम्प्रत्येकैकशस्त्वेनं[६] यन्मन्यन्ते पृथङ्नराः ।
विश्वे[ग] विश्वानर[७][घ] स्तेन कर्मणा स्तुतिषु स्तुतः ॥ ६८ ॥
वृषे[ङ]व कपिलो[८][च] भूत्वा यन्नाकमधिरोहति ।
वृषाकपि[छ]रसौ तेन विश्वस्मादिन्द्र उत्तरः[ज] ।
रश्मिभिः कम्पयन्नेति वृषा वर्षिष्ठ[झ] एव सः ॥ ६९ ॥

---

(१) उद्यन् जगदिति क० घ० ।
(२) ततः इति ख० ।
(३) तेजसः इति क० घ० ।
(४) एतमिति क० ख० घ० ङ० ।
(५) सौर्थं पृथक् तेऽपी इति क० घ० ।
(६) मां प्रत्येकैकशस्त्वेवेति क० घ० ।
(७) वैश्वानरः (ञ) इति क० घ० ।
(८) वृषेव कपिल इति क० घ०, वृषैककपिल इति ख० ग० ।

---

(क) ऋ० ४,५४,१४ । (ख) ऋ० १,१०,३ । (ग) ऋ० १,३,७–९ ।
(घ) ऋ० १, १८६, १ । (ङ) ऋ० १, ५९, ६ । (च) ऋ० १, ७, ८ ।
(छ) ऋ० १०, २७, १६ । (ज) ऋ० १०, ८६, १ । (झ) ऋ० ४, १८, ९ ।
(ञ) ऋ० १, २७, ६ ।

सायाह्नकाले भूतानि स्वापयन्नस्तमेति यत् ।
वृषाकपि[क]रितो[१] वा स्यादिति मन्त्रेषु दृश्यते ॥७०॥
त्रिषु धन्वे[ख]ति[२] ह्यैन्द्रेण प्रत्युक्तो वारिषाकपे[३] ।
विष्णातेर्विशतेर्वा स्याद्वेवेष्टेर्व्याप्तिकर्म्मणः ।
विष्णुर्निरुच्यते वातः सर्व्वं सर्व्वान्तरश्च सः[४] ॥ ७१ ॥
पञ्च षड्विंशतिश्चैव यानि नामानि सप्त च ।
मध्यगग्नीन्द्रसूर्य्याणां तान्युक्तानि यथाक्रमम् ॥ ७२ ॥
नैपातिकानां नाम्नां तु प्रागुक्तैर्नामलक्षणैः ।
समन्त्रानां पृथक्त्वेन परिसङ्ख्या न विद्यते ॥ ७३ ॥
पार्थिवी[ग] मध्यमा[घ] दिव्या वागपि त्रिविधा तु या ।
तस्याः सूक्तानि नामानि यथास्थानं निबोधत ॥ ७४ ॥
शतन्तु भजते सूक्तमेता[५]नद्यः स्तुता[६]भुवि ।

---

(१) ध्वतः इति पुस्तकान्तरं ।
(२) धान्वेतीति ग० त्रिबुधन्वेतीति ङ० ।
(३) वृषाकपे(ङ) इति ख० ।
(४) रश्मिभिः कम्पयन्नेतीत्यादि सर्व्वं सर्व्वान्तरश्च स इत्यन्तपाठः क० घ० पुस्तकयोर्नेष्यते ।
(५) ह्येषा इति क० घ०, एषा इति ख० ग० ।
(६) तदेति क० घ० ।

---

(क) ऋ० १०, २७, १६ । (ख) ऋ० १, १८, ७ । (ग) ऋ० ८, २५, ६ । (घ) ऋ० ६, ३१, ९ । (ङ) ऋ० १०, ८६, १०—२२ ।

यं वै वेनं[१] भजन्त्यापो[२] यदा[३] चौषधयः सदा[४] ॥ ७५ ॥
अरण्यानी[क] च रात्री[ख] च श्रद्धा[ग] घोषा:[५][घ] सरस्वती ।
पृथिवी चैव नामैषा भूत्वा[ङ]या च भजन्ति च[६] ॥ ७६ ॥
अग्नायी[च]नामतोऽप्येषा[७] भूत्वाग्नेयेषु[८] केषुचित् ।
स्तुता निपात[छ]मात्रेण तत्र तत्रेह दृश्यते ॥ ७७ ॥
मध्ये सत्यदिति[ज]र्वाक्च[९] भूत्वा चैषा सरस्वती ।
समग्रं भजते सूक्तं त्रिभिरेव तु नामभिः ॥ ७८ ॥
एषैव दुर्गा भूत्वर्च[झ] हत्वा[१०] स्यात् सूक्तभागिनी[११] ।

---

(१) यदा चेनमिति क० ख० घ०, यच्च वेनमिति ग० ।
(२) भवन्त्यापः इति ख० ।
(३) तदेति क० घ० ।
(४) तथेति क० घ० ।
(५) चैषेति क० ख० घ० ।
(६) भूत्वा या भजते तृचीति क०, याभजते तृचीति घ० ।
(७) चग्नायीत्वा च नामैषेति क० घ० ।
(८) भूत्वाग्नेयीष्विति क० घ० ।
(९) वाक्यमिति क० घ०, मध्यसत्यदितिर्वाक्चेति ख० ।
(१०) हत्येति ङ० पुस्तकान्तरञ्च ।
(११) एषैव दुर्गा भूत्वर्चमिति श्लोकार्द्धं क० घ० पुस्तकयोर्न विद्यते ।

---

(क) ऋ० १०,१४६,४। (ख) ऋ० १,१९३,१। (ग) ऋ० ७,३२,१४।
(घ) ऋ० १, ४६, १। (ङ) ऋ० १०, १६२, ५। (च) ऋ० ५, ४६, ८।
(छ) ऋ० ४, ५५, १। (ज) ऋ० १, ४३, २। (झ) ऋ० ७, ६६, ११।

तन्नामानि च(१) मिन्द्राणी सरमा(क)रोमशो(ख)र्वशी(ग) ॥७९॥
भवत्पथ्या(घ)सिनीवाली(२)(ङ) राका(च) चानुमतिः(३)(छ) कुहूः ।
गौर्धेनुर्देवपत्न्योग्न्या(४) पथ्या स्वस्त्यच(५) रोदसी ।
नैपातिकानि चग्भाञ्जि(६) येषां नामानि कानिचित् ॥८०॥
यदा तु वाग्भवत्येषा(७) सूर्य्याऽमुं लोकमाश्रिता ।
तदा सूक्तमुषा(८)(ज) भूत्वा सूर्य्या(झ) च भजतेऽखिलम् ॥८१॥
वृषाकपाय्युचं(ञ) भूत्वा सरण्यू(ट)र्द्वे च ते भुवम्(९) ।

(१) सूक्तार्धानीयमिति क० घ० । सूक्तार्धाधीयमितिपाठो विशुद्धः ।
(२) नटचस्त्वग्रा(ठ)सिनीवालीति क० घ०, भवस्त्वग्न्या सिनीवालीति ख०, भवत्यग्रा सिनीवालीति ग० ।
(३) राकोचानुमतिरिति क०, राकोचानुमितिरिति घ०, राका चानुमितिरिति पुस्तकान्तरम् ।
(४) गोरीर्गौर्धेनुपत्न्योग्न्या इति क० घ०, देवपत्न्योग्ना इति ङ० पुस्तकान्तरञ्च ।
(५) स्वस्ति चेति ख०,स्वस्तिश्चेति ग० ङ० पुस्तकान्तरञ्च ।
(६) नैपातिकान् पृथग्भाञ्जीति क० ।
(७) भजत्येषेति क० घ० ।
(८) सूक्तमुखेति ख० ग०, तथा सूक्तमुषेति ङ० पुस्तकान्तरञ्च ।
(९) स्वेन तद्द्वयमिति क० घ०, ते भुवमिति पुस्तकान्तरम् ।

(क) ऋ० १, ६२, ३ । (ख) ऋ० १, १२६, ७ । (ग) ऋ० ५, ४१, १९ ।
(घ) ऋ० ३, ५४, ५ । (ङ) ऋ० ११, ३२, ८ । (च) ऋ० ११, ३२, ८ ।
(छ) ऋ० १०, ५९, ६ । (ज) ऋ० १, १८१, ६ । (झ) ४, ४४, १ ।
(ञ) ऋ० ७, ६६, ११ । (ट) ऋ० १०, १७, २ । (ठ) ऋ० २, ३२, ४ ।

निपातमात्रं भजते क्वचित्तु[1] पृथिवी सती ॥ ८२ ॥
सूर्य्यामेव[2] सतीमेतां गौरीं वाचं सरस्वतीम् ।
पश्यामो वैश्वदेवेषु निपातेनैव केवलाः[3] ॥ ८३ ॥
घोषा[क] गोधा[ख] विश्ववारा[ग] पालोपनिषन्निषत्[4] ।
ब्रह्मजाया[घ] जुहूर्[ङ]नामागस्त्यस्य[5][च] स्वसाऽदितिः[छ] ॥ ८४ ॥
इन्द्राणी चेन्द्रमाता[6] च सरमा[ज] रोमशो[झ]र्वशी[ञ] ।
लोपामुद्रा[ट] च नद्यश्च यमी[ठ] नारी च शाश्वती[7][ड] ॥ ८५ ॥
श्रीर्लक्ष्मीः सार्पराज्ञी[ढ] वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्य्या[ण] च सावित्री ब्रह्मवादिन्य ईरिताः ॥ ८६ ॥

---

(१) क्वचित्तु इति क० घ०, युवचेति ग० ।
(२) पृथिवी त्विति क० घ० ।
(३) केवलामिति क० घ० ।
(४) पालोपनिषन्निषत् इति क० ख० घ० ङ० ।
(५) छन्दोऽनुरोधात् नाम अगस्त्यस्येति पाठः समीचीनः ।
(६) चन्द्रमातेति ख० ।
(७) शश्वतीति क० घ०, तथैव चेति ख० ।
(८) सार्व्वराज्ञेति ख० ।

---

(क) ऋ० १०, ४०, ५ । (ख) ऋ० ८, ६९, ९ । (ग) ऋ० ३, ४, ३ ।
(घ) ऋ० १०, १०९, ३ । (ङ) ऋ० १, ५८, ४ । (च) १०, ६०, ६ ।
(छ) ऋ० १, ४३, २ । (ज) ऋ० १, ६२, ३ । (झ) ऋ० १, १२६, ७ ।
(ञ) ऋ० ५, ४२, १९ । (ट) ऋ० १, १७९, ४ । (ठ) ऋ० १०, १०, ९ ।
(ड) ८, १, ३४ । (ढ) ऋ० ४, ४४, १ ।

नवकः प्रथमस्त्वासां(१) वर्ग(२) स्तुष्टाव देवताः ।
ऋषिभिर्देवताभिश्च समूहे(३)मध्यमो गणः ॥ ८७ ॥
आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तमः ।
उत्तमस्य तु वर्गस्य य ऋषिः सैव(४) देवता(५) ॥ ८८ ॥
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः(६) ।
तस्मादात्मस्तवेषु स्याद्य ऋषि. सैव(७) देवता ॥ ८९ ॥
संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषिः(८) ।
यस्तेनोच्येत वाक्येन देवता तत्र(९). सा भवेत् ॥ ९० ॥
उच्चावचेषु चार्थेषु निपाताः समुदाहृताः ।
कर्मोपसंग्रहणार्थे च(१०) क्वचिच्चौपम्यकारणात् ॥ ९१ ॥
ऊनानां पूरणार्थं वा(११) पादानामपरे क्वचित् ।

---

(१) तासामिति ख० ।
(२) वर्गाः इति क० घ० ।
(३) समूहे इति क०, समुद्रे इति ख० ।
(४) ऋषिश्चैव चेति घ० ।
(५) आत्मनो भाववृत्तानीत्यादि य ऋषि सैव देवता इत्यन्तपाठः क० घ० पुस्तकयोर्न विद्यते ।
(६) देवता चोत्तमस्तु यः इति क० घ० ।
(७) आत्मस्तवेष्वेवं भवेदृष्टैवेति क० घ० ।
(८) भवत्यृषिरिति क० घ० ।
(९) तेष्विति क० घ० ।
(१०) कर्मोपसंग्रहणार्थेष्विति क० घ० ।
(११) पूरणार्थेष्विति क० घ० ।

दद‌ुर्देवा स्तुता नेत्रे ततोऽनन्धो बभूव च(१) ॥१५॥
स वेदिषद् इत्यस्तौ(२)च्चतुर्भिर्जातवेदसं।
समिद्ध आप्रियोऽन्त्यैन्द्री तमित्यग्नेः पराणि षट्(३) ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्मित्रमिति त्रिभिः।
मित्रं मैत्री वदत्येता(४) माधेनवस्य शंसति ॥१७॥
अदितिं चाथ वाय्वग्निं तथा रूपं हि दृश्यते।
अग्निं मेने दितिं त्वेव कुत्से चेह(५) च शौनकः ॥१८॥
ऋषिरत्र प्रसङ्गाद्वा दर्शनाद्वानुकीर्तयेत्(६)।
विष्णोर्नुकमिति त्रीणि वैष्णवानि पराण्यतः ॥१९॥
प्रवः पान्तं चतुर्भिस्तु(७) इन्द्राविष्णू सह स्तुतौ।
गृह्णाति वा वैष्णवानि ऋषिस्त्वेत्यृचि(८) कांक्षति ॥२०॥

---

(१) तु तस्याश्चौ नेत्रे न त्वन्धतां गत इति क० घ० च०।

(२) इत्याद्यैरिति ङ०।

(३) आप्रः परैन्द्री षड्भिः त्वग्निं तमित्यत इति क० घ० च०, आप्रि-योन्त्यैन्द्री प्राग्यावाग्नेः पराणि चेति ग०।

(४) मैत्रीव देव्येतामिति ङ०।

(५) यास्कः कुत्सो वेदेति ङ० पुस्तकान्तरञ्च।

(६) ऋषिरस्य प्रसङ्गात्वाद्दृष्ट्वाप्नोत्यनुकीर्त्तयदिति ङ०।

(७) प्रवःपान्तञ्चतुर्भिर्यांग्निरिति ग०, तथा चतसृभिर्यांग्निरिति ङ० पुस्तकान्तरञ्च।

(८) तावामित्यृचीति ग० ङ० पुस्तकान्तरञ्च।

जीर्णन्तु दीर्घतमसं क्षिप्रास्तत्परिचारिणः(१) ।
दासा अथ(२) नदीतोये दृष्टिहीनमुपादधुः(३) ॥२१॥
तमैकस्त्रैतनो(४)(क) नाम प्रत्स्यैनमपाहनत् ।
शिरयांसावुरश्चैव स्वयमेव न्यकृन्तत(५) ॥२२॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिपन्(६) ।
(७)अनयामास चोत्थाय(८) कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारकाः इति ख॰ ङ॰ पुस्तकान्तरे च ।
(२) दासा बध्वेति क॰ घ॰ च॰ ।
(३) चाशादधुरिति क॰ घ॰ च॰ ।
(४) त्रैतनः इति क॰ घ॰ च॰ ।
(५) ख॰ ङ॰ पुस्तकयोः पुस्तकान्तरे च,—
हत्वा दीर्घतमास्तं तु पापेन महता वृतम् ।
आत्मानमान्यमुदधैव ततोऽदाप्नोद्धितो भृशम् ।
इत्यधिकं पठितम् ।
(६) तं नद्यं समुदक्षिपदिति ङ॰ पुस्तकान्तरे च ।
(७) अनयामास चोत्थायेति श्लोकार्द्धपाठः, ख॰ ङ॰ पुस्तकयोः पुस्तकान्तरे च,—
अङ्गराजमहिषी सुष्णा मुनिमजं पुत्रकाम्यया ।
राज्ञा च प्रहितां दासीं मातां मत्वा महातपाः ।
इत्यधिकं पठितम् ।
(८) सोऽग्नीन्महूप्रसैकादिति ख॰ ङ॰ पुस्तकान्तरे च ।

---

(क) ऋ॰ १,।१५८, ५ ।

तुष्टाव चैव सूक्ताभ्या[१]मबोधीत्यश्विनावृषिः ।
प्रेति द्यावापृथिव्यौ तु[२] पराभ्यामेतदुत्तरं ॥२४॥
किमाभेवं परं[३] मानो मेध्यस्याश्वस्य संस्तवः ।
ईर्मां[क]ता म इति त्वश्वं नीयमानं प्रशंसति ॥२५॥
स्वयूथ्यास्तस्य चैवात्र बहवः संस्तुता हयाः ।
नियुक्ताश्चानियुक्ताश्च प्रसङ्गादनुकीर्त्तिताः ॥२६॥
संज्ञप्तवदसंज्ञप्तं हविष्यं[ख] चाह सूनवः[४] ।
तस्मिन्मांसस्य सूनस्य चतुर्धा हविषस्तथा[५] ॥२७॥
वासोऽधिवाससोश्चात्र स्वधिते[ग]श्च प्रकीर्त्तनं[६] ।
गात्रशूलस्थूणाना[घ]ञ्च[७] स्वधितेश्च प्रकीर्त्तनं[८] ॥२८॥

---

(१) वेति वस्तुताभ्यामिति ङ० पुस्तकान्तरश्च ।
(२) द्यावापृथिव्यातेति ङ० पुस्तकाप्टश्च ।
(३) परे इति ङ० पुस्तकान्तरश्च ।
(४) भविष्यं चाह भूतवत् इति ख० ङ० पुस्तकान्तरश्च ।
(५) चतुर्थी हविमत्तयेति ग०, तत्सौनस्यं च मांसस्य चरूया ह्न विषा- न्तथेति ङ० पुस्तकान्तरश्च ।
(६) यदिभ्रस्यस्व कीर्त्तितमिति ख० ग०, वासाधिवाससोश्चात्र यज्ञीभस्य च कीर्त्तनमिति ङ० ।
(७) गात्रशूल्यस्थुषायाश्चेति ख० ङ० ।
(८) क० घ० च० चिह्नितपुस्तकेषु, गात्रशूलस्थूणानाश्चेतिश्लोकार्द्धं न प्रतिष्ठम्'।

---

(क) ऋ० ४, २७, २। (ख) ऋ० १, १६२, ४। (ग) ऋ० १, १६२, १८। (घ) ऋ० ५, ६२, ७।

भागस्य(१) कीर्त्तनं चात्र इन्द्रापूष्णोः सह स्तुतिः(२) ।
सूक्तं यदस्य(३) वामीयं वैश्वदेवं तदुच्यते ॥२९॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं ।
अग्निस्तु वामः पलितो(क) वायुर्भ्राता तु मध्यमः ॥३०॥
घृतपृष्ठ(ख)स्तृतीयोऽत्र(४) सप्त वै रश्मयस्तु ताः ।
परास्तु कथयन्त्यग्निं(५) यथा वर्षति पाति(६) च ॥३१॥
अहोरात्रदिना(७)न्मासानृतूंश्च परिवर्त्तनं(८) ।
पञ्चधा त्रिविधा(९) चैव षोढा द्वादशधैव च(१०) ॥३२॥
संवत्सरं चक्रवच्च पराभिः कीर्त्तयन्नृषिः ।

---

(१) छागस्येति ग० ङ०
(२) इन्द्रापूष्णोश्च कीर्त्तनमिति ख० ङ० ।
(३) यदस्येति ङ० ।
(४) तृतीयोऽस्य इति ङ० ।
(५) अग्निरिति ङ० ।
(६) वातीति ख० ङ० ।
(७) अहोरात्रान् दिनानिति ङ० ।
(८) पक्षांश्च परिकीर्त्तनमिति ङ० ।
(९) पञ्चधा च त्रिधेति ख० ङ० ।
(१०) द्वादशधापि चेति ङ० ।

---

(क) ऋ० १, १६४, १ । (ख) ऋ० १, १६४, १ ।

चत्रज्ञानं(१) च धेनुश्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्मं पूर्व्वयुगीयञ्च(२) साध्यान् देवगणांस्तथा ।
विविधानि च कर्म्माणि त्वग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वायोश्च जगती स्थान(३)सङ्गमे ।
हरणं रश्मिभिश्चैव(४) विसर्गं(५) पुनरेव च ॥२५॥
कर्म्मानुकीर्त्तनञ्चात्र(६) पर्जन्याग्निविवस्वतां ।
मातापुत्रौ तु वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणा(७) वाचं प्राहुः सरस्वतीं ।
शरीरमिन्द्रियैर्युक्तं चेत्रमित्यभिधीयते ॥२७॥
वेद तत्प्राण(८) एवैकस्तस्मात् चेत्रज्ञ उच्यते ।
मेघः(९) शक(क) स्तस्य धूमः(१०) सलिलं वास एव वा ॥२८॥

---

(१) चेत्रज्ञानमिति ग०, चेत्रं ज्ञानमिति ङ० ।
(२) पूर्व्वयुगानाञ्चेति ख० ङ०, धर्म्मपूर्व्वयुगौ पञ्चेति ग०,
(३) जगति स्थास्विति ख० ङ० ।
(४) वारः इति ख०, वारामिति ङ० ।
(५) विसर्पमिति ख० ।
(६) चास्येति ख० ङ० पुस्तकान्तरञ्च ।
(७) प्राया इति क० ग० घ० ङ० ।
(८) वेत्येतत्प्राय इति ङ० ।
(९) मेघे इति ख० ।
(१०) धूमे इति ख० ।

---

(क) ऋ० ८, ८०, ३ ।

सोम उखा[क]भवन्त्यस्य पावकास्य चयोऽधिपाः।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३८॥
इन्द्रं मित्रमिमौ सौर्यौ सौरी चान्या सरस्वते[१]।
मारुतेन्द्रस्तु संवादः कयेति[२] परमः स्तनः[३] ॥४०॥
मरुतामयुज[४]स्त्वैन्द्री युग्माः सर्वाः[५] सहान्यया।
एकादशी प्रथमा च मारुतस्तृच उत्तमः[६] ॥४१॥
इषस्येव तु नवोक्तं कर्तृत्वमितरस्य तु।
इतिहासं पुरावृत्तमृषिभिः परिकथ्यते[७] ॥४२॥
समागच्छन्मरुद्भिस्तु[८] चरन् व्योम्नि शतक्रतुः।

---

(१) क० ख० ग० घ० पुस्तकेषु, मेघं शकलस्य धूम इत्यादि सौरी चान्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च स्थल स्थले,—
सूक्तमस्यपरन्त्वं स्तेतनूत्थानमेव प्रशंसति।
प्रवादवञ्चनत्वाच्च तत सलिलमुच्यते॥
इति पाठो वर्त्तते।
(२) कयेतीति ख०।
(३) ततः इति ख० ङ०।
(४) मरुतः इति ङ०।
(५) सर्वेति ङ०।
(६) उत्तरः इति ग०, माहयस्त्विश उत्तरा इति ङ० पुस्तकान्तरेच।
(७) इषस्यैव तु नवोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(८) चेति ख० ङ०।

---

(क) ऋ० १, १०६, २।

दृष्ट्वा तुष्टाव तानिन्द्रस्तेनेन्द्र[१]मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्यः संवादं तपसा वेद[२]तत्त्वतः।
स तानभिजगामाशु निरूप्येन्द्रं हविस्तदा ॥४४॥
मरुतस्ताभितुष्टाव सूक्तैस्तदिति च[३] त्रिभिः[४]।
महश्चिदिति चैवेन्द्रं सहस्रमिति चैतया[५] ॥४५॥
निरुप्तं तद्धविश्चेन्द्रं मरुद्भ्यो दातुमिच्छति[६]।
विज्ञायावेत्य तद्भव्यं लिन्द्रो[७] नेति तमब्रवीत्[८] ॥४६॥
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतं।
कस्यचित्तय सञ्चारे[९] चित्तमेव विनश्यति ॥४७॥
किञ्च इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव।
मरुद्भिः सम्प्रकल्पयस्व[१०]वधीर्मा च[११] शतक्रतो ॥४८॥

---

(१) ते चेन्द्रमिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(२) तमसावोधीति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) तन्विति लिति क॰ घ॰ च॰।
(४) तन्विति पञ्चभिरिति ग॰।
(५) महश्चिदित्यनेनैन्द्रं सहस्रं त ऋचाव्ययमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) इच्छयेति ख॰, इच्छतः इति ङ॰ पुस्तकान्तरञ्च।
(७) तद्भावमिन्द्र इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) ततोऽब्रवीदिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(९) तथैसञ्चारे इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) सम्प्रकल्पस्वेति ख॰ ङ॰।
(११) मा नः इति ख॰ ङ॰ पुस्तकान्तरञ्च।

किं नो भ्रातरिति तस्मामिन्द्रो मान्यमुपालभत् ।
अगस्त्यस्त्वरमित्यस्या तुभ्य[१]मिन्द्र प्रशामयत्[२] ॥४८॥
प्रादात्सवनन[३] कृत्वा तेभ्य एव च तद्धवि ।
पूर्व्वया सान्त्वयन्निन्द्रो ह्यगस्त्य स्नेहकाम्यया ॥५०॥
एव सवनन कृत्वा प्रादात्तेभ्य स तद्धवि[४] ।
सुते[५] चकार सोमे च[६] तानिन्द्र सोमपीथिन[क] ॥५१॥
तस्मादिषाभिपातेन[७] ऐन्द्रेषु[८] मरुतस्तु तान्[९] ।
प्रीतात्मा पुनरेवर्षिस्तास्तुष्टाव पुन पृथक्[१०] ॥५२॥
मरुत प्रेति सूक्ताभ्या[११] मिन्द्र षड्भि परैस्तु स[१२] ।

(१) कुद्धमिति ख० ङ० पुस्तकान्तरच ।

(२) प्रसादयदिति ख० ङ० प्रसाधयदिति पुस्तकान्तरम् ।

(३) सङ्गमनमिति क० ग० घ० च० ।

(४) पूर्व्वया सान्त्वयन्निन्द्र इत्यादि स तद्धविरित्यन्तपाठ क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(५) सूते इति ग० ।

(६) सोमेऽचेति ख० ङ० पुस्तकान्तरच ।

(७) निपातेष्विति ङ० पुस्तकान्तरच ।

(८) मन्द्रेष्विति ख० ।

(९) मरुत स्तुता इति ङ० पुस्तकान्तरच ।

(१०) पृथक् पृथगिति ख० ङ० पुस्तकान्तरच ।

(११) प्रतिसूक्ताभ्यामिति ख० ङ० पुस्तकान्तरच ।

(१२) गायन षड्भि शचीपतिरिति ख० ङ० पुस्तकान्तरच ।

(क) ऋ० १०, १५, ८ ।

ऋतुस्नाता[१] मृषिर्भार्यां लोपामुद्रां यशस्विनीं ॥५.३॥
उपजल्पितुमारेभे रहःसंयोगकाम्यया ।
द्वाभ्यां सा त्वब्रवीदृग्भ्यां पूर्वाभ्यामिति चिकीर्षितं ॥५.४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ॥५.५॥
उक्तेन[२] कृतवानस्मिन्[३] ब्रह्मचार्युत्तमे ऽगौ ।
प्रशंस्य[४] तं परिष्वज्य गुरू मूर्ध्न्यवजिघ्रतुः ॥५.६॥
स्निग्धमाहतुश्चोभावनागा असि[५] पुत्रक ।
युवो[क]रजांसीति ततः सूक्तैः पञ्चभिरश्विनौ ॥५.७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे तुए[६] ।
द्यावापृथिव्यौ सूक्तेन आनो विश्वान् दिवौकसः ॥५.८॥
पितु[ख]मन्नं समिद्धाप्न्यो अग्निमग्ने नयेति च[७] ।
बृहस्पतेरनर्वाणं[ग] कंकतोपनिषत्परं[८] ॥५.९॥
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदुः ।

---

(१) ऋतौ स्नातामिति क० घ० च० ।
(२) न त्वेनः इति ख० ग०, नत्वेतदि ङ० पुस्तकान्तरञ्च ।
(३) ब्रस्मीति ख० ग० ङ० ।
(४) प्रशस्येति ग० ङ० ।
(५) चोभौ ह्यनागोऽसीतीति क० ग० घ० च० ।
(६) कतरेति परेत्य स्थिति क० घ० च०, सूक्तेन कतरेति त्वि ङ० ।
(७) समिद्धो ह्याप्रियोऽग्ने च नयामये इति ख० ङ० पुस्तकान्तरञ्च ।
(८) परेति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ३४, १ । (ख) ऋ० १, ६१, ७ । (ग) ऋ० १, ९०, १ ।

उक्तेषु[1] कर्मस्विन्द्रेषु भीस्तावाग्र्उ विवेश ह[2] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्हयत् ।
निहत्य तौ ग्टत्समदस्त्वृषि[3] शक्रोऽभ्यभाषत ॥६६॥
यथेष्ट माम[4]खे पश्य प्रियस्त्व[5] ह्यागतोसि[6] मे ।
वरं ग्टहाण मत्तस्त्वमक्षय[7] चास्तु ते तप ॥६७॥
प्रज्ञ[8]स्त प्रत्युवाचर्षिरस्माक वदतां वर[9] ।
तनूनामस्तु चारिष्टिवाक्चास्तु हृदयङ्गमा ॥६८॥
सुवीरा[क]र्रयिमन्त[ख]श्च वयन्त्वामिन्द्र धीमहि[10] ।
इन्द्र[11]लाश्च विजानीमो वय जन्मनि[12] जन्मनि ॥६९॥

त्वद्गत(१)श्चैव मे भावो माप्रगास्त्वद्रथीतरः(२) ।
निरुक्तं तदिदं चार्षमिन्द्रश्चैवान्यथान्यथा ॥७०॥
वने वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः(३) ।
तथेत्युक्त्वा तुराषाट् तां(४) पाणौ जग्राह दक्षिणे ॥७१॥
ऋषिश्चास्य सखित्वेन पाणिना पाणिमस्पृशत् ।
सहितौ जग्मतुश्चैवं महेन्द्रसदनं(५) प्रति ॥७२॥
तत्रैनमार्चयत्प्रीत्या स्वयमेव पुरन्दरः ।
कर्म्मणा विधिदृष्टेन तमृषिश्चाभ्यपूजयत्(६) ॥७३॥
सखित्वाच्च पुनस्त्वेन(७)मुवाच हरिवाहनः ।
गृणन्माद्यसे यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्गृत्समदो नाम शौनहोत्रो(८) भविष्यसि ।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं श्रुधी(९)(क)त्यृषिः ॥७५॥

---

(१) त्वा तत इति क० घ० च० ।
(२) माप्रगाश्च रथीतरः इति ङ० पुस्तकान्तरञ्च ।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, क० ग० घ० च० चिह्नितपुस्तकेषु, नोपलभ्यते ।
(४) त्वामित्यत्र तमितिपाठः शुद्धः । रथाङ्गन्विति ख० ङ० पुस्तकान्तरञ्च ।
(५) महेन्द्रभवनमिति ख० ङ० पुस्तकान्तरञ्च ।
(६) चाभ्यपूजयदिति क० । तमृषिं चाभ्यपूजयदिति ख० ग० घ० च० ।
(७) एवमिति पुस्तकान्तरम् ।
(८) शौनकोऽच इति ख० ।
(९) इन्द्रश्रुधीत्यृषिरिति क० पुस्तकान्तरञ्च ।

---

(क) ऋ० २, २५, १८ ।

उक्तेषु[१] कर्मस्विन्द्रेषु भीतावावृ विवेश ह[२] ॥६५॥
इदमन्तरमित्युक्ता ताविन्द्रस्तु न्यवर्तयत्।
निहत्य तौ गृत्समदमृषिं[३] शक्रोऽभ्यभाषत ॥६६॥
यथेदं मास[४]खे पश्य प्रियस्त्वं[५] ह्यागतोसि[६] मे।
वरं गृहाण मत्तस्त्वमचर्यं[७] चास्तु ते तपः ॥६७॥
प्रज्ञ[८]स्त्वं मत्युवाचर्षिरस्माकं वदतां वरः[९]।
तनूनामस्तु चारिष्टिर्वाक्चास्तु यद्यन्नमा ॥६८॥
सुवीरा[क]रयिमन्त[ख]श्च वयन्त्वामिन्द्र धीमहि[१०]।
इन्द्र[११]लाद्य विजानीमो वयं जन्मनि[१२] जन्मनि ॥६९॥

(१) कीर्त्त्येष्विति क० घ० च०।
(२) भीतौ ह्युपतुस्तदेति ख० ङ० पुस्तकान्तरञ्च।
(३) इदमिति ङ० पुस्तकान्तरञ्च।
(४) मांसमिति पाठः सङ्गतः।
(५) मास खे पश्य प्रियस्त्वमिति क० घ० च०। अथ, मांसं खे पश्यं प्रियस्त्वमिति पाठो विशुद्धः।
(६) प्रियत्वं चागतोऽसीति ङ०।
(७) मत्तश्चाचर्यमिति क० घ० च०।
(८) प्रज्ञः इति क० घ० च०।
(९) वरेति क० ग० घ० च०।
(१०) इन्द्र वामहे इति ख०, इन्द्रमीमहे इति ङ०।
(११) इन्द्रमिति ङ०।
(१२) ह्याजनीति क० ग० घ० च०।

(क) ऋ० ६, १३, ५। (ख) ऋ० १०, ७४, १।

[1]धृतव्रता वैश्वदेवमृतमैन्द्रं परन्तु यत्[2]।
प्रति क्रतुमिति त्वष्टामिन्द्राग्नीमौ मह स्तुतौ ॥८०॥
सरस्वति त्वमित्यस्मिन्नर्द्धर्चे मध्यमा तु वाक्[3]।
बृहस्पतिन्तु यो नस्तु[4] उत्तमा मरुतस्तुतिः[5] ॥८१॥
अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु[6]।
द्यावापृथिव्योर्द्वे त्वाष्ट्रौ[7] तथैवैन्द्र्यौ[8] परे ततः ॥८२॥
द्वे द्वे राकासिनीवाल्योः षड्लैङ्ग्योऽग्न्यास्तथाऽन्तया[9]।
[10]रौद्रं मारुतन्तु परं[11]मा ते धारावरा इति ॥८३॥

(१) वायव्यीयो म इत्याद्या दुःस्वप्नायप्रयाशिनीः। श्लोकार्द्धमेतत् ग॰ चिह्नितपुस्तके धृतव्रतेति श्लोकात् पूर्व्वमधिकं पठितं।
(२) परं यत इति ख॰, परं तत इति ङ॰।
(३) माध्यमानुवागिति ख॰।
(४) बृहस्पते स्तुतिर्यो मा इति ख॰, यो न स्त इति ग॰।
(५) बृहस्पते स्तुतिर्यो उ त्तम्बऋङ्मरुतां स्तुतिः इति ङ॰।
(६) अस्माकं वैश्वदेव स्यात् सूक्तादावस्य चास्य ऋगिति ग॰, स्यादद्या ऋक् चान्तिमास्य त्विति ङ॰ पुस्तकान्तरञ्च।
(७) ऋग्द्यावापृथिवीत्यृचेति क॰ घ॰ च॰, द्यावापृथिव्योस्त्वाष्ट्रौ वै इति ख॰। वै इत्यत्र वा इति ग॰।
(८) वाथ चैन्द्र्या इति ग॰, चैन्द्रौ वैवौ इति ङ॰ पुस्तकान्तरञ्च।
(९) तथान्त्ययेति ग॰, षड्भुग्वाग्यन्तया स्तुताः इति क॰ घ॰ च॰।
(१०) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्व्वं, तत्पूर्व्वे द्वे ऋचौ कुह्वाः कुहूमहमिति स्तुते। तदुत्तरे द्वे अनुमतेरनुमो न्विति ते स्तुते। धातुस्तवस्तत्रादौ धाता दधातु नो रयिम्(क)। इत्यधिकं पठितं।
(११) रौद्रं स्यात् परमावतमिति पुस्तकान्तरम्।

(क) ऋ॰ १, १, ३।

ददर्श संस्तुवन्नेव तत्र स ब्रह्मणस्पतिम् ।
बृहस्पतिं तु तुष्टाव दृष्टलिङ्गाभिरेव च(१) ॥७६॥
स तमप्यभितुष्टाव(२) चतुर्भिरत(३) उत्तरैः ।
गणानां विश्वमित्यस्यां(४) सहेन्द्रब्रह्मणस्पती ॥७७॥
बृहस्पतिं प्रसङ्गाद्वा(५) ब्रह्मणस्पतिमेव च(६) ।
तुष्टाव कर्मणैकेन प्रभावस्यान्तरन्तयोः(७) ॥७८॥
मित्रावरुणदक्षांश्च सुविजात(क)भगार्यम्णाम्(८) ।
आदित्यानामिमाः (९)सूक्तमिदं वारुणमुच्यते(१०) ॥७९॥

---

(१) बृहस्पतिस्तु तुष्टाव दृष्टि लिङ्गस्तवैः सहेति ख०, दृष्टलिङ्गस्तवैः सहेति घ०।

(२) अभ्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च।

(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति ङ०, चतुर्भिरेत उत्तरैरिति पुस्तकान्तरम्।

(४) अस्या इति ङ०, विश्वामित्रस्येति ख०।

(५) प्रसक्तत्वादिति ख० घ०।

(६) ब्रह्मणस्पतिमेव वेति ङ०।

(७) द्वयोरिति ग०। श्लोकार्द्धमेतत् ख० घ० चिह्नितपुस्तकयोर्नोपलभ्यते।

(८) सुविजातभगार्यमामिति ख०।

(९) इमाप्युक्तमिति ख०। इमाः इत्यत्र इदमिति पाठो विशुद्धः।

(१०) वरुणमिति ग०।

---

(क) ऋ० १, १४१, ७।

ऋषेर्जिगमिषोरग्नौ ववाग्ना(क)स्थाय(१) दक्षिणाम्।
स तमार्षेण सम्प्रेक्ष्य चक्षुषा पक्षिरूपिणम्।
पराभ्यामभितुष्टाव सूक्ताभ्यान्तु कनिक्रदत्(ख) ॥८८॥
प्रयास्य गायंस्तपसाऽभ्यगच्छ(२)-
द्बृहस्पितामेकशतञ्च पुत्रान्।
स गाधिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्नेयं यत्परञ्च(३) ॥८९॥
वैश्वानरीयेति(४) समित्समिद्रा
प्रोदे आग्नेये(५) उत्तरे त्वत्र(६) सूक्ते।
द्यावापृथिव्यौ तु निपातभाजा(७)
वापोऽथ देवाः पितरश्च मित्रः(८) ॥९०॥
आग्नेयेषु दृश्यन्ते स्तुतास्तु(९)-

(१) ववासे प्रतीति ख० ङ० पुस्तकान्तरञ्च।

(२) श्वध्यगच्छन्निति ङ० पुस्तकान्तरञ्च।

(३) नेत्यग्नये तत्परे चेति ख० ङ० पुस्तकान्तरञ्च।

(४) वैश्वानरीयेऽयेति ख० ङ० पुस्तकान्तरञ्च।

(५) प्रियो द्वे चेति ख० ङ० पुस्तकान्तरञ्च।

(६) त्वस्येति ख० ङ० पुस्तकान्तरञ्च। उत्तरेत्वत्रेति ग०।

(७) द्यावा पृथिव्या उषसो निपाता इति ख० ग० ङ० पुस्तकान्तरञ्च।

(८) आपोऽथ देवा पितरोऽथ मित्र इति ख० ग० ङ० पुस्तकान्तरञ्च।

(९) क० घ० च० चिह्नितपुस्तकेषु स्तुतास्तु इत्यत्र तु इति पाठो न दृश्यते।

(क) ऋ० २, २, २। (ख) ऋ० १, १२९, १।

वामदेवो मृगान् दृष्ट्वा विभ्यत्तेभ्य ऋषिः स्वयम्[१]।
[२]अपान्नपादुपेत्यत्र स्तुतः सूक्ते ततः[३] परे ॥८४॥
तुभ्यमित्यार्भवे[४] सूक्ते सावित्रादाश्विनम्परम्[५]।
सोमः पूषादितिश्चैव सोमापूष्णेन्त्यया स्तुताः ॥८५॥
वायव्ये[६] वैन्द्रवायव्या अन्त्यास्तु प्रउगा[क]स्तृचाः[७]।
प्रत्यृक् स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ॥८६॥
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः परे।
[८]स्तुतिन्तु[९] पुनरेवेच्छन्निन्द्रो भूत्वा कपिञ्जलः ॥८७॥

---

(१) वामवत्तु मृगान् स्तौत्यध्वनि निप्रस्थितास्तु हि। इति क॰ घ॰ च॰, मृगं दृष्ट्वेति ग॰।

(२) ग॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च अपान्नपादित्यस्मात् पूर्व्वं स्तुहि श्रुतमिति तस्या रुद्रमस्तौत्प्रसादयन्नित्यधिकं पठितं।

(३) तव इति पुस्तकान्तरम्।

(४) इत्यार्तवे इति ख॰ ङ॰ पुस्तकान्तरञ्च।

(५) श्लोकार्द्धमेतत् ग॰ चिह्नित पुस्तके नोपलभ्यते।

(६) वायव्ये इति ग॰।

(७) वायव्ये चैन्द्रवायवौ पश्चात् प्रउगास्तृचा इति क॰ ग॰ घ॰ च॰।

(८) ङ॰ चिह्नितपुस्तके पुस्तकान्तरे च स्तुतिमिति श्लोकार्द्धात् प्राक्, वाचस्तेयो म इत्येषा दुःस्वप्नाघ्यमथाग्निनीति श्लोकार्द्धमधिकं दृश्यते।

(९) स्तुवन्निति ख॰।

---

(क) ऋ॰ १०, १२०, १।

एते काण्व्यावृचौ यौष्यौ ह्यश्नन्ति नेति पञ्च च[१] ॥९४॥
शेषा वज्रभ्यो यूपेभ्यो[२] वैश्वदेवी तृगष्टमी[३] ।
अंस्या[क]न्या त्रश्विनी योक्ता[४] पञ्चमैन्द्राग्न[५]मुच्यते ॥९५॥
वैश्वदेव्यग्निमुषसं[६] दधिक्राव्णेति[७] चैतया ।
आग्नेन्द्री त्वग्न इन्द्रेति परा[८] वैश्वानरस्तृचः ॥९६॥
प्रयन्तु मारुता[९]स्त्वन्या शतधारस्तुतस्तवः ।
प्र वो वाजा ऋतूं[१०] स्तौति ऋत्विजः स्तौति[११]मन्यतः॥९७॥
पुरीष्यास[१२] [ख]इति त्वग्निंधिष्ण्यानग्नीन् प्रशंसति ।

---

(१) एते काण्व्यावृचौ चोभौ यौष्यौ ह्यश्नन्ति पञ्च चेति ख० ।
(२) शेषेभ्यो वज्रयूपेभ्य इति ग० ।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्यृगष्टमीति पुस्तकान्तरम् ।
(४) स्यान्ता प्रशस्वना योक्तेति घ० ।
(५) स्यान्ताः प्रशस्वनाः योक्तैन्द्राग्नी ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च ।
(६) अग्निमुषसं वैश्वदेवीति क० ख० ग० घ० ङ० ।
(७) दधिक्रामितीति क० ग० घ० ङ० ।
(८) अग्नीन्द्री त्वम इन्द्रस्त्वं परेति ङ० पुस्तकान्तरञ्च ।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) ऋतूनितिपाठः समीचीनः ।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च ।
(१२) पुरीष्यास इति ग० ।

---

(क) ऋ० १, १९१, ७ । (ख) ऋ० ३, २२, ४ ।

वैश्वानरो वरुणो जातवेदाः।
सूक्तेऽका यत्र यथास्तुतिर्वा(१)
नैपात्यांस्तां(२)श्चोपमार्थांश्च(३) विद्यात् ॥८१॥
राजर्षयो गृत्समदा वसिष्ठा
भरद्वाजाः कुशिको गौतमाश्च।
विश्वेऽश्विनावङ्गिरसोऽथ योऽदिति-
र्भोजाः कण्वो(४) भृगवो रोदसी दिशः ॥८२॥
सावित्रसौम्याश्विन(५)मारुतेषु
ऐन्द्राग्नेये रौद्रपौष्णपर्वेषु(६)।
आदावन्ते सूक्तमध्ये स्तुतासु(७)
न व्याप्नन्ति देवताः सूक्तभाजः(८) ॥८३॥
अग्नेः प्रथमोऽध्याय ऊर्ध्वं त्वमुष जातवे(क)।

---

(१) सूक्ते यत्र तथाच्चस्तुतिर्वेति ग० घ० पुस्तकान्तरञ्च।
(२) निपातार्थां इति क० ग० ख० घ०।
(३) उपमार्थाद्येति शाखा पाठः।
(४) कण्वा इति ग० घ० पुस्तकान्तरञ्च।
(५) सौम्याश्विनेति ग० घ० पुस्तकान्तरञ्च।
(६) पौष्णैरथोर्ध्वमिति ग० घ० पुस्तकान्तरञ्च, पौष्णैस्तथेति ख०।
(७) स्तुतास्वा इति घ० पुस्तकान्तरञ्च।
(८) प्रन्ते देवतां सूक्तभाक्त्वमिति पुस्तकान्तरम्, सूक्तभाजा इति ख०, सूक्तभाक्त्वमिति ग०।

---

(क) ऋ० ६ म० १।

एते काण्व्यावृचौ यौप्यौ ह्यञ्जन्ति त्वेति पञ्च च[१] ॥९४॥
शेषा वस्केभ्यो यूपेभ्यो[२] वैश्वदेवौ त्वृगष्टमी[३] ।
अंसा[क]न्या प्रश्विनी योक्ता[४] पञ्चैन्द्राग्न[५]मुच्यते ॥९५॥
वैश्वदेव्यग्निमुखं[६] दधिक्राव्णेति[७] चैतया ।
आग्नेन्द्री त्वग्न इन्द्रेति परा[८] वैश्वानरस्तृचः ॥९६॥
प्रयन्तु मारुता[९]श्चान्त्या प्रतधारञ्जुरुस्तवः ।
प्र वो वाजा ऋतू[१०] स्तौति ऋत्विजः स्तौति[११]मन्यतः॥९७॥
पुरीष्यास[१२] [ख]इति त्वस्मान्धिष्ण्यानग्नीन् प्रशंसति ।

---

(१) एते काण्व्यावृचौ चोभौ यौप्यौ ह्यञ्जन्ति पञ्च चेति ख० ।
(२) शेषेभ्यो वस्कयूपेभ्य इति ग० ।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्वृगष्टमीति पुस्तकान्तरम् ।
(४) स्याप्ता प्रयस्वना योक्तेति घ० ।
(५) स्यान्ताः प्रयस्वनाः योक्तोन्द्राग्नो ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च ।
(६) अग्निमुखं वैश्वदेवीति क० ख० ग० घ० च० ।
(७) दधिक्रामितीति क० ग० घ० च० ।
(८) आग्नेन्द्री त्वम इन्द्रस्तु परेति ङ० पुस्तकान्तरञ्च ।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) ऋतूनितिपाठः समीचीनः ।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च ।
(१२) पुरीष्यास इति ग० ।

---

(क) ऋ० २, १८१, ७ । (ख) ऋ० ३, २२, ४ ।

ज्ञेया[१]श्चैव तु होतारस्ते दैव्याश्चैव तत्र तु[२] ॥९८॥
त्रयोविंशतिरैन्द्राग्नी इच्छन्तीति पराश्रतः।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे[३] ॥९९॥
[४]पुरोहितः सन्निच्छार्थं सुदासः सोऽहरद्धनम्।
विपाट्छुतुद्र्योः सम्भेदं शमित्येते उवाच ह ॥१००॥
प्रवादास्तत्र दृश्यन्ते द्विवद्बहुवदेकवत्।
अच्छेत्यर्द्धर्चे पच्छो वा नदीष्वप्येकवन्ति ते ॥१०१॥
आद्ये ह्यृचे द्विवत्साऽर्द्धे विश्वामित्रवचःश्रुतेः।
एनाभिर्ऋग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
पथ्यएत्र्यो[५]श्चतुर्थ्याश्च दशम्याश्चेतरा ऋषेः।
सप्तम्यामृचि षष्ठ्याश्च यौ देवौ[६] परिकीर्तितौ ॥१०३॥
निपातिनौ तु तौ ज्ञेयौ त्वैन्द्रापार्वत्यृगुत्तमे[७]।
करोति पुत्रिकां नारी[८] यथा दुहितरन्तथा ॥१०४॥

---

(१) यूपा इति ख०।
(२) तत्र हेति ख० ङ०।
(३) विश्वामित्र समूहिरे इति ख० ग० पुस्तकान्तस्थ, स संवदन्निति क० घ० च०।
(४) पुरोहित इत्यादि श्लोकत्रयं क० घ० ङ० चिह्नितपुस्तकेषु नोपलभ्यते।
(५) पथ्यएत्र्योरिति पाठः साधुः।
(६) यौदकौ इति ग०।
(७) पार्वत्यर्गमेति ङ० पुस्तकान्तरस्थ।
(८) नारीति ख० ङ० पुस्तकान्तरस्थ।

तस्यां सिञ्चति रेतो वा[१] तच्छासदिति कीर्तितम्।
रिक्थस्य दुहितुर्दानं नेत्यृचि प्रतिषिध्यते[२] ॥१०५॥
तस्यास्यैव[३] यवीयांसं भ्रातरं ज्येष्ठवत्सुतं।
सुदासश्च महायज्ञे दक्षिणा गाधिसूनवे[४] ॥१०६॥
निगृहीतं बलाच्चेतः[५] सोऽवसीदद्विचेतनः।
तस्मै [६]नाम्नीन्तु सौरीं वा नाम्ना वाचं ससर्परीं॥१०७॥
सूर्यक्षयादिहागत्य ददुस्ते[७] जमदग्नयः।
कुशिकानां ततः सा वागमतिस्तामपाहनत् ॥१०८॥
उपेत्य चास्यां[८] कुशिकान् विश्वामित्रो बुबोध यत्।
लब्धा वाचं च हृष्टात्मा[९]तानृषीन् प्रत्यपूजयत्[१०] ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाचं स्तुवन् स्वयम्।
स्थिरावित्यनघो[क]ऽङ्गान्यनडुह[११]स्य स्तुवन् मन्॥११०॥

(१) रेतो धा इति ङ॰ पुस्तकान्तरञ्च।
(२) प्रतिषेधतीति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) तस्यास्यापीति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) प्रक्रिया गाधिसूनवे इति क॰ ग॰ घ॰ च॰।
(५) मघोना बलाच्चेत इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) तस्येति क॰ घ॰।
(७) ता ददुरिति ख॰ ङ॰ पुस्तकान्तरञ्च। भागधेयम चाह्वयेति क॰ ग॰ घ॰ च॰।
(८) उपेति चास्यां कुशिकानिति क॰ घ॰, उपेत्य वाचं कुशिकानिति ङ॰।
(९) प्रतिष्ठात्मेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) अभ्यचेतयदिति ङ॰ पुस्तकान्तरञ्च।
(११) इत्यनघाङ्गान्यनडुहर्षिर्मिति क॰ घ॰। अनघोऽङ्गान्यनडुहः इति ग॰।

(क) ऋ॰ ७, १०, १०।

(१)अनसोऽङ्गानि चोत्थाप्य अनड्वाहौ गृहात्मजौ।
ततश्च खशरीरञ्च गृहान् स स्वयमाप ह ॥११११॥
रथञ्च खशरीरेण गृहान् गच्छन् परादद।
परास्यतस्तौ यास्त्वत्र वसिष्ठद्वेषिणीर्विदुः(२) ॥११२॥
विश्वामित्रेण याः(३) प्रोक्ता अभिशापा इति स्मृताः।
द्विषद्द्वेषास्तु ताः प्रोक्ता विद्याश्चैवाभिचारिकाः(४) ॥११३॥
वसिष्ठास्ता(५)न शृण्वन्ति तदाचार्य्यकसम्मतम्।
कीर्त्तनाच्छ्रवणाद्वापि महान् दोषः प्रजायते(६) ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां(७)स्तुष्टाव चतुर्भिरिमभित्यृषिः।
अस्तौदिश्वात्मना सर्व्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनस इत्यादिसार्द्धश्लोकः क० ग० घ० चिह्नितपुस्तकेषु नेष्यते। तेषु अस्मिन् स्थले, तन्वञ्च स्वा शरीरञ्च गृहानाच्छन् परादद इति पाठोऽस्ति।
(२) वसिष्ठद्वेषिण्यः स्मृताः इति क० ख० ग० घ०।
(३) त्विति क० ख० ग० घ० च०।
(४) विद्वेषिण्यः स्मृता विद्यादभिचारेषु प्रब्द्यते। इति क० ग० घ० च०।
(५) त्विति ख० पुस्तकान्तरञ्च, ते इति ङ०।
(६) श्लोकार्द्धमेतत् क० घ० चिह्नितपुस्तकयोर्न दृश्यते।
(७) विश्वान् देवांश्चेति ङ० पुस्तकान्तरञ्च।

(१)देवानाममुरत्वं तदेकं मह्रदितीरयन् ।
अश्विनौ मित्र आभरो(२) धेनुर्मित्र इहेव वः ॥११७॥
(३)वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु ।
ऐन्द्राग्नेरमृतमप्स्वर्भवे सूक्तः स उत्तमः(४) ॥११८॥
(५)पूर्वे सूक्ते निपातोऽत्र उषो वाजेन पञ्चमात् ।
उपस्यादुत्तरे षड्भिः स्तुता आदेवता इवेः(६) ॥११९॥
ऐन्द्रावरुणः प्रथमो बार्हस्पत्यमतः परः(७) ।
पौष्णमादित्यमैन्द्राद्य मैत्रावरुण उत्तमः(८) ॥१२०॥
तुष्टाव अमरस्मिद्य(९) तेन देवा हता इधौ ।
देवर्षिपितृपूजार्थं य अस्मादपपञ्चनः(१०) ॥१२१॥

यस्य वै श्येनरूपेण अहर(१)द्दुवहा मधु ।
सोऽग्निन्तु पञ्चदशभिरिन्द्रं षोडशभिः परैः ॥१२२॥
अयिस्त्वामिति तुष्टाव सूक्तैरेतैस्तु(२) गौतमः ।
स भ्रातरमिति त्वास्तु(३) तिसृष्वग्निर्निपातभाक् ॥१२३॥
वरुणेनाभिसंस्तौति आङ्ग(४)रन्वे निपातितम् ।
लिङ्गोक्तदेवते सूक्ते एके(५) प्रत्यग्निरेव तु(६) ॥१२४॥
अपिर्बोधदिति द्वाभ्यां स्तौति सोमकमेव तु(७) ।
तस्यैव आयुरर्थाय(८) पराभ्यामश्विनौ स्तुतौ ॥१२५॥
अश्वसानुजनिष्येऽहं(९) नवाणां गर्भ एव(१०) तम्(११) ।
अन्वगात्त्वदितिः(१२) पुत्रमिन्द्रमात्मद्वितैषिणी ॥१२६॥

---

(१) यस्य च श्येनरूपेण आहरदिति ख० ङ० पुस्तकान्तरञ्च ।
(२) एति स्त्विति ग० घ०, एति चेति ङ० पुस्तकान्तरञ्च ।
(३) त्वास्त्विति ङ० ।
(४) अभिसंस्तौत्या प्राङ्गरिति क० ग० घ० च० ।
(५) लिङ्गोक्तदेवत सूक्तमेते इति क० घं० ।
(६) लिङ्गोक्तैर्देवते सूक्ते एके प्रत्यग्निरित्युभे, इति ङ० ।
(७) सोमकभूपतिमिति ङ० पुस्तकान्तरञ्च ।
(८) आयुषोऽर्थायेति ख० ङ० पुस्तकान्तरञ्च ।
(९) अनिष्यामेति क० ख० च०, जनिष्याव इति ग० ।
(१०) गर्भमेवेति क० ग० ङ० च० ।
(११) त्विति क० ख० ग० घ० च० ।
(१२) अन्वयाददितिरिति ङ० पुस्तकान्तरञ्च ।

स जातमात्रो युद्धाय ऋषिमेवाजुहाव तं[1] ।
योधयन्[2]वामदेवस्तं कृत्वात्मनि वलं तथा ॥१२७॥
दिनानि दश रात्रीश्च[3] विजिग्ये चैनमोजसा ।
स तद्द दम[4]मित्यस्यां विक्रोशन्नृषिसंसदि ॥१२८॥
स्वयन्नेवाभितुष्टाव[5] नकि[क]रिन्द्रेति[6] गौतमः ।
किमादुतासीति चास्यां[7] मन्युं मध्ये[8] पराणुदत् ॥१२९॥
अथास्य रूपवीर्य्याणि धैर्य्यकार्य्याणि तान्यृषिः[9] ।
विविधानि च कर्म्माणि प्रशंसादितये तथा ॥१३०॥

(१) स जातमात्रं युद्धायेति क० ख० ग० घ० च० ।

(२) योधयेदिति क० ख० घ० च० ।

(३) रात्र्यस्तेति क० ग० घ० च० ।

(४) सतद्व इत्यमिति ग० ।

(५) स्वयं तेनाभितुष्टावेति ग०, स्वयमेवाभितुष्टावेति ङ० पुस्तकान्तरञ्च ।

(६) इन्द्रेत्येति ङ० ।

(७) किमादुतासीदित्यस्यामिति ङ० पुस्तकान्तरञ्च ।

(८) मन्युमर्धे इति क० ग० घ० च०, मन्युमध्ये इति ख० ।

(९) धैर्य्याण्याणि चारित्र्यिति क०, धैर्य्यघ्नाणि चारित्र्यिति घ० च०, तान्दमिरिति ङ० ।

(क) ऋ० १, २७, ८ ।

अयमित्यप वै सूक्ते[१] द्वचे स्तुतिर्ह्यतस्य हि[२]।
प्रसुपविभ्यो नवभिर्ऋग्भिः श्येनस्य[क] संस्तवः ॥१२१॥
पराभिस्त्वेति पञ्चर्चे सोमेनेन्द्रः स्तुत[३] सह ।
सोमप्रधाना[४]मेतान्तु क्रौष्टुकि[५]र्मन्यते स्तुतिं ॥१२२॥
दिवश्चिदिति चानेन द्वचेनेन्द्रेण संस्तुत.[६]।
उषस मध्यमा मेने त्वाचार्य्य[७] शाकटायनः ॥१२३॥
वाममित्यृक्स्तुतायात्र[८] भगः पूषेति चार्य्यमा ।
करूलती[ख]ति पूषोक्तोऽदन्तकः स इति श्रुतेः ॥१२४॥
अस्माकमुत्तम सूर्य्यं स्तौतीत्याहाश्वलायन[९]।

---

(१) अदृमित्यात्मसस्तव इति ख० ङ०, अद्दमित्यास्तसंस्ताव' इति ग०।
(२) द्वचे स्तुतिविसस्य चौति ख०, द्वचे स्तुतिरिवास्य चौति ङ० पुस्तकान्तरञ्च।
(३) पराभिस्त्वेव पञ्चर्चे सोमेन्द्र सस्तुत इति क० घ०, सोमेन्द्रौ च स्तुत इति ग०।
(४) सोमप्रधानमिति क० ख० ग० घ० च०।
(५) क्रोष्टुक इति क० घ० च०।
(६) चैतेन ते द्वचे नेन्द्रसंस्तुतेति क० घ० च०, इन्द्रसस्तुवामिति ग०।
(७) मेन त्याचार्य्य इति ख० ङ० पुस्तकान्तरञ्च।
(८) वाममित्यृचि सस्तुतेति ख० ङ० पुस्तकान्तरञ्च।
(९) करूलतीत्यादि स्तौतीत्याहाश्वलायन इत्यन्तपाठ क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

---

(क) ऋ० १, ११८, ११। (ख) ऋ० ४, ३२, २३।

इन्द्रस्य हरयो ह्यश्वा अग्नेरश्वस्तु[1] रोहितः ॥१२५॥
सूर्य्यस्य हरितश्चैव[2] वायोर्नियुत एव च ।
रासभा रोहितो[3]ऽश्विभ्यामजाः[4]पूष्णश्च[5]वाजिनः॥१२६॥
पृषतो[6]ऽश्वास्तु मरुतां गावोऽरुण्यस्तथोषसः[7] ।
सवितुर्वाजिनः श्यावा[8] विश्वरूपा वृहस्पतेः ॥१२७॥
सहैते देवताभिस्तु[9] स्तूयन्ते स्वल्पशो[10] ऽन्यथा ।
आयुधं वाहनं चापि स्तुतौ यस्येह दृश्यते ॥१२८॥
तमेव तु स्तुतं विद्यात्तस्यात्मा बहुधा हि सः ।
कनीनका[क]सूक्तशेषो हर्य्योः स्तुति[11] रिहोच्यते ।
चत्वार्य्यतश्च विज्ञेयान्यप्रगृह्याणि[12] विद्रधे.[ख] ॥१२९॥

इति बृहद्देवतायां चतुर्थोऽध्यायः ।

---

(१) अश्वास्त्विति क॰ ख॰ घ॰ ङ॰ च॰ ।
(२) प्रोक्ता इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) रासभो मोहितः इति ख॰ङ॰पुस्तकान्तरञ्च, रासभौ सहितः इति ग॰।
(४) माजाः इति क॰ घ॰ च॰ ।
(५) पूष्णस्त्विति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) एषत्य॰ इति ङ॰ पुस्तकान्तरञ्च ।
(७) तथोषसामिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) श्यामा इति क॰ घ॰ च॰ ।
(९) चेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(१०) स्तूयन्तेऽप्यतेऽन्यथेति क॰ घ॰ च॰, स्तूयन्तेऽप्यल्पशोऽन्यथेति ग॰ ।
(११) धर्मस्तुतिरिति क॰ घ॰ च॰, सूक्तशेषोऽथ धर्मस्तुतिरिति ग॰ ।
(१२) चत्वारि परमाणियान्यप्रगृह्याणीति ख॰ ङ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ १, ७, २ । (ख) ऋ॰ ४, ३२, २३ ।

## अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्भवं चीणि[१] दधिक्राणि पराण्यतः ।
ऋग्द्यावापृथिव्यौ स्तौति दधिक्राव्णं[क]मुखे तु या[२] ॥१॥
परोचैरमुतो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा[३] ॥२॥
नियुक्ता सूर्यदेवत्या हंस इत्यैतरेयके[४] ।
द्वे त्वैन्द्रावरुणे सूक्ते[५] तत्र[६] चौण्याश्विनाग्निकः[७] ।
अग्रं वायो विद्दो[ग] त्वेषु [८]वायव्याः सप्त कीर्त्तिताः ॥३॥

(१) पञ्चार्भवाणीति ङ० ।
(२) दधिक्राव्ना स्तुतौ द्वि वामिति ख०, दधिक्रायां मुखे तु येति ग०, दधिक्रायामुतो (ख) द्वि वामिति ङ० ।
(३) इत्यृचीति क० ग० घ० च० ।
(४) श्लोकार्द्धमेवत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) द्वे इन्द्रावरुणे इन्द्रादिति ङ० ।
(६) ततः इति ग० ङ० पुस्तकान्तरञ्च ।
(७) चाश्विनाग्निकः इति क० ख० ग० घ० च० ।
(८) विद्दो मा त्वा इति ङ० पुस्तकान्तरञ्च ।

(क) ऋ० ४, ३९, २ । (ख) ऋ० १, २३, १५ ।
(ग) ऋ० ४, ४८, १ ।

नव चैन्द्रावरुण्या ऐन्द्र्या(१)स्तिस्रः शतेन षट्(२) ।
इदं कपितदैवत्यं यत्तु साम्नोत्तमो ह्यृचः(३) ॥४॥
स्तुतिरिन्द्राबृहस्पत्योरष्टावेता ऋचः स्मृताः ।
बार्हस्पत्यन्तु तत्सूक्तमिदमित्यौषधे परे ।
पुरो धातुः कर्मसंज्ञा च इन्द्राणोच्यते(४) ह्यृचे(५) ॥५॥
तस्याविचौ द्वे तु ऋचौ वैश्वदेवं(६)
मध्यौ द्यावापृथिवीयं तत्परञ्च(७) ।
क्षेत्रस्येति तिस्रः क्षेत्रपत्याः(८)
शुनं(क) वाहाः शुनदेवौ त्वृगुत्तमा(९) ॥६॥

---

(१) इन्द्रः इति क० ग० घ० ङ० ।
(२) शतेन षदिति ङ० ।
(३) इदमित्यौषधे परे इति क० घ० ङ०, यत्तं साम्नोतिमो ह्यृचः इति ग० ।
(४) स इन्द्राणोच्यते इति पुस्तकान्तरम् ।
(५) स्तुतिरिन्द्राबृहस्पत्योरिति श्लोकः क० घ० ङ० चिह्नितपुस्तकेषु नेक्ष्यते ।
(६) तस्याविन्द्रौ वैश्वदेवमिति ङ० ।
(७) परन्तु यदिति क० ग० घ० ङ० ।
(८) क्षेत्रस्य क्षेत्रपत्यास्तृचस्त्विति क० घ०, क्षेत्रस्येति क्षेत्रपत्यास्तृचस्त्विति ग० ।
(९) शुनदेवत्यृगुत्तमेति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, ११७, ५८ ।

वायुः शुनः सूर्य एवाच[१] सीरः[२]
शुनासीरौ[क] वायुसूर्यौ[३] वदन्ति।
शुनासीरं यास्क इन्द्रन्तु मेने
सूर्येन्द्रौ तौ मन्यते शाकपूणिः ॥७॥
शुनासीरौ पञ्चम्यां तु स्तुतौ तौ
सीतायै षष्ठी लय सप्तमी च[४]।
शुनं नः फालाः[ख] कृषिं स्तौति पादः[५]
शुनं कीनाशाः[ग] कृषिजीवान् मनुष्यान्[६] ॥८॥
शुनं पादे पर्जन्यं तृतीये[७]
चौनृषिः कृषिकामो[८]जगाद।

(१) एवाचेत्यत्र त्वेवेति ख० ङ० पुस्तकान्तरस्थ।
(२) सौर्यं इति क० घ० च०।
(३) वायुसूर्यमिति क० घ० च०।
(४) द्वे तु सीतायै षष्ठी सप्तमी चेति क० ग० घ० च०।
(५) पादे इति ख०।
(६) कृषिजीमनुष्यानिति क० घ० च०।
(७) स्तुवः पादेऽथ पर्ज्जन्यस्तृतीये इति क० ग० घ० च०।
(८) अन्त्यान् तृषिर्धर्म्मकामः इति क० घ० च०, अन्त्यस्तृषिर्धर्मकाम इति ग०।

(क) ऋ० ४, ५७, ५। (ख) ऋ० ४, ५७, ८। (ग) ऋ० ४, ५७, ८।

ऋषिं वा(१) स्तौति सर्वं हि सूक्तं
समुद्रादित्यग्नेर्मेध्यमस्य ॥९॥
आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं
ह्याग्नेय(२) यद्वाव्यसूक्तं(३) हि दृष्टं(४) ।
अपां स्तुतिं वा यदि वा घृतस्तुतिं
गवां स्तुतिं वा सूक्त(५)मेतद्वदन्ति ॥१०॥
स्वर्भानुदृष्टं सूर्यस्य अपघ्नत्य(६)तमोऽत्रयः ।
सप्तविंशतिभिः सूक्तैरबोधीत्यग्निमस्तुवन् ॥११॥
त्रैवृष्ण(क)स्त्र्यरुणस्त्रसदस्युश्च(ख) अश्वमेध इति त्रयः ।
स्तूयमानाः परीक्ष्याः स्युरचिष्वेते(७)कचित् कचित्(८) ॥१२॥
ऐक्ष्वाक(९) स्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।

---

(१) ऋषिवदिति क० घ० च० ।
(२) आग्नेयमिति ख० ङ० पुस्तकान्तरञ्च ।
(३) वाय्वाव्यसूक्तमिति क० घ० च०, वा प्राज्यसूक्तमिति ग० ।
(४) प्रदिष्टमिति ख० ङ० पुस्तकान्तरञ्च ।
(५) सूक्तमेके सौर्यमिति क० ग० घ० च० ।
(६) स्वर्भानुदिष्टसूर्यस्यापघ्नन् ये इति ख० ङ० पुस्तकान्तरञ्च ।
(७) अन्विष्येते इति घ० ।
(८) त्रैवृष्ण्यस्त्रसदस्युश्चेति श्लोकः ख० ङ० चिह्नितपुस्तकयोर्न विद्यते ।
(९) ऐक्ष्वाकुरिति क० ग० घ० च० ।

---

(क) ऋ० ५, २७, १ । (ख) ऋ० ४, ३८, १ ।

सङ्कपाद्यश्वरश्मींश्च[1] वृशो जानः[2] पुरोहितः ॥१२॥
स ब्राह्मणकुमारस्य रथो गच्छञ्छिरोऽच्छिनत्।
एनःस्वित्यब्रवीच्चैव स राजैनं[3] पुरोहितं ॥१४॥
सोऽथर्वाङ्गिरसान्मन्त्रान्[4] दृष्ट्वा सञ्जीव्य तं शिशुं[5]।
क्रोधात्सन्त्यज्य राजानमन्यं देशं समाश्रितः ॥१५॥
हरोऽप्यग्नेर्नेनाशाच[6] तस्यापक्रमणादृषेः[7]।
अग्नौ प्रास्तानि हव्यानि[8] न ह्यपच्यत[9] कानिचित् ॥१६॥
ततः प्रव्यथितो राजा अभिगम्य प्रसाद्य च[10]।
आनीत्वा सहर्षं जानं[11] पुनरेव पुरोदधे ॥१७॥
स प्रसन्नो वृशोऽन्विच्छद्दरमग्नेर्नृपच्चये।

---

(१) अस्य रश्मींश्चेति क॰ घ॰ च॰।
(२) वृशोजानः इति ख॰।
(३) राजा तमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) सोऽथ वार्षाणि सामानीति क॰ घ॰ च॰, सोऽथर्वा गिरिशान् मन्त्रानिति ख॰।
(५) सुतमिति ङ॰।
(६) अस्येति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(७) तस्याप्रक्रमणादृषेरिति क॰ ग॰ घ॰ च॰, गुरोरिति ङ॰ पुस्तकान्तरञ्च।
(८) प्रासानि पथ्यानीति क॰ घ॰ च॰, प्राप्तानि ग्रस्तानीति ख॰, प्राप्तानि चाज्यानीति ङ॰।
(९) ह्यपच्यन्तेति पाठः साधुः। न ह्यपचतेति क॰ घ॰ च॰, यवघ्नते इति ख॰, न ओप्यन्ते चेति ङ॰।
(१०) तमिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(११) आनीय सहर्षं यानं इत्येव पाठो भवितुमर्हति।

अविन्दत पिशाचीं च[१] जायां तस्य च भूपतेः ॥१८॥
निषण्णः स तया सार्द्धं मासं द्यां कश्यपावपि[२] ।
तामुपामन्त्रयाञ्चक्रे कसेतं त्वमिति त्वृचा[३] ॥१९॥
हरः[४] कुमाररूपेण वृषस्ता[५]मभ्यभाषत ।
विज्योतिषेति चोक्तायां सहसाग्निरुदज्वलत् ॥२०॥
[६]पिशाचीमदहत्तां स यत्र चोपविवेश सा ।
एष एव परामृष्टो भाल्लवी ब्राह्मणे[७]ऽवृचः ॥२१॥
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः[८] ।
भवेदेव परामर्शः सूक्तस्यास्य व्यपेक्षया[९] ॥२२॥
भवन्ति वाच्या मन्त्रा[१०] हि विधिशब्देन[११] चोदिताः ।

---

(१) तामिति ग० ङ० पुस्तकान्तरञ्च ।
(२) कश्यपावपीति क० ध० च० ।
(३) सुवेत्यृचेति ङ० ।
(४) नरः इति क० घ० च० ।
(५) वृषंस्तामिति ख० ।
(६) ख० ङ० चिह्नितपुस्तकयो पुस्तकान्तरे च, पिशाचीमदहत्ता स इति श्लोकात् प्राक्, सहमान समायान्तं प्रकाशश्च प्रकाशयन्नित्यधिकं श्लोकार्द्धं पठितम् ।
(७) भाल्लाभिब्राह्मण इति ख०, भाल्लविब्राह्मण इति ङ० ।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(९) विवक्षयेति ख० ङ० पुस्तकान्तरञ्च ।
(१०) वाच्यान्येषामिति क० ग० घ० च० ।
(११) विधिवृष्टेनेति क० ग० घ० च० ।

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रियः[1] स्तौतीया[2]श्चैतरेयके।
आप्रियः सुसमिद्धाय[3] पञ्चमं सूक्तमत्र तु[4] ॥२४॥
एतद्[5]वैश्वदेवी वा अन्या चैन्द्राग्न्युपोत्तमे।
ऐन्द्राणि द्वादश त्रीणीत्युशना[6]यत्र[7] संस्तुतः ॥२५॥
उशनेति तु पादेन संस्तुयद्वामनेन च[8]।
इन्द्राकुत्सेति चैतस्यां कुत्सेनेन्द्रः स्तुतः सह ॥२६॥
यत्त्वा सूर्य्येति चात्रीणां पञ्चर्चे[9] कर्म्म कीर्त्यते।
[10]त्रैवृष्णस्त्र्यरुणो राजा अश्वमेध स्तवं च यः ॥२७॥
स्तूयमानाः प्रतीच्याः स्युरत्रिम्वेते क्वचित् क्वचित्।
अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽत्रिर्महर्षिः स्वयम् ॥२८॥
दानतुष्टः प्रशंसैतान्राजर्षीनिति केचन।

---

(१) जामदग्न्यस्तथैवाज्यः इति क० घ० च०, यथाप्रीय इति ग०।
(२) स्तोकीयाः इति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) आप्र० सुसमिद्धायेति क० ग० घ० च०।
(४) अत्रिश्चेति ख० ङ० पुस्तकान्तरञ्च।
(५) एदस्मगिति क० ग० घ० च०, एदस्मगिति ख०।
(६) द्वादशान्यादीन्युशना इति ङ० पुस्तकान्तरञ्च।
(७) त्वत्रेति क० ख० ग० घ० च०।
(८) उशनेति च पादोऽयं संस्तुयद्वा परस्य यः इति ख०, परस्य यः इत्यत्र परस्मय इति ङ० पुस्तकान्तरञ्च।
(९) पञ्चर्चः इति क० घ० च०।
(१०) त्रैवृष्णस्त्र्यरुणो राजेत्यादि सार्द्धाष्टश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते।

आभीरध्येषणाद्वैभ्यो अग्निं प्रति च दृश्यते ॥२९॥
अयुतञ्च गवां त्रीणि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽन्वये ॥३०॥
अश्वमेधशतं चोक्षांस्तमदस्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥३१॥
आत्मा हितात्मने[1] दद्यादग्रहीन्नृपतेर्ऋषिः ।
अत्रेः सुतमृषिं बभ्रुमार्त्विज्याय वृणञ्च यः ॥३२॥
सहस्रदक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥३३॥
तस्मै चत्वारि चत्वारि महावीरञ्च काञ्चनम् ।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥३४॥
प्रतिगृह्य ऋषिर्गच्छन् मध्यमेनाग्निना पथि ।
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च तत् ॥३५॥
कोनुवान् वैश्वदेवानि एकादश[2] पराण्यतः[3] ।
मारुतानि दश प्रेति इलाभीत्यृचि तु स्तुता[4] ॥३६॥
द्वितीययान्यया स्तुतः सविता शौनकोऽब्रवीत्[5] ।
उपेति वार्हस्पत्यस्तृचो यो मारुत्युगुत्तरा ॥३७॥

---

(१) आत्मन्हितात्मने इति पाठः सङ्गतः ।
(२) कोनुवाश्च वैश्वदेवान्येकादशेति क० ।
(३) त्विति ङ० पुस्तकान्तरञ्च ।
(४) प्रेतीळाभीत्यृचि तु संस्तुतेति ग०, इळामि न ऋचा स्तुतेति ख० ङ० पुस्तकान्तरञ्च ।
(५) श्लोकार्द्धमेतत् क० ग० घ०,च० चिह्नितपुस्तकेषु न दृश्यते ।

तमुष्टुही तु रौद्री स्यात्[१] प्रमुष्टुतिरिति तृचि।
बृहस्पतिः शाकपूणिः पर्जन्याग्नी तु गालवः ॥३८॥
यास्कस्तु पूषणं मेने स्तुतमिन्द्रन्तु शौनकः।
वैश्वानरं भागुरिस्तु मारुत्यौषसमाश्विनं[२] ॥३९॥
वायव्याध्वर्यवः सौमी बृहत्येन्द्री परा तु या[३]।
[४]अग्निं धर्म्मं पराञ्चन्ति[५] अश्विनौ स्तौत्युगच्छ च ॥४०॥
प्रेति वां पूषणं या चेत्यर्द्धर्चेऽग्निरिहोच्यते।
प्रथमेऽथ द्वितीये च स्तुता एति दिवौकसः ॥४१॥
आवाचं मध्यमां स्तौति ततोऽन्या तु बृहस्पतिं।
[६]ज्याया समिति चादित्यं प्र वो वायुरिहोच्यते ॥४२॥
तं मन्वये[क]ति सौमी वा दैव्यैन्द्री वा प्रजापतेः।
परोक्षवैश्वदेवं तदाह कौषीतकिः स्वयम् ॥४३॥
तेषु तृतीयमित्युक्तं देवान् ऊव[ख] इदं परम्।

---

(१) तिति क० ग० घ० च०।
(२) चाश्विनीति क० ग० घ० च०।
(३) बृहत्येन्द्राग्नेसावित्रीति ङ० पुस्तकान्तरञ्च।
(४) अग्निं धर्म्ममित्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।
(५) पराचन्तीति पुस्तकान्तरम्।
(६) ज्यया समिति चादित्यमित्यादि देवान् ऊव इदं परमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ० १, ८६, १। (ख) ऋ० १, १०, ०।

देवानां पत्नीरिति तु (१)देवपत्न्यो ऋचि स्तुताः ॥४४॥

अयं चतुर्णामिति चेन्द्रवायू
त्रिभिः स्तुतौ वायवुक्थे(ख)ति वायुम्।
रथं ऋषा रोदसी स्तूयतेऽत्र
यस्याः स्तुता मरुतो रुद्रपत्न्याः(२) ॥४५॥

आरुद्रा स इति त्वेषां रुद्राणां संस्तुतो गणः।
मरुतान्तु गणस्यैते आया(३)रुद्रा इति स्तुताः(४) ॥४६॥
अथावग्निरिमौ(५) चोभौ त्वग्नी(६)पार्थिवमध्यमौ(७)।
यदुत्तमे ऋचेऽर्द्धर्चे इत्ये(क)ऽग्निं संस्तुतौ ऋचि ॥४७॥
मध्यमा वाक् स्त्रियः सर्व्वाः पुमान् मारुतश्च मध्यमः।
गणाश्च सर्व्वे मरुतो गुणभेदात् पृथक् पृथक्(८) ॥४८॥

---

(१) चेति ख० ङ० पुस्तकान्तरच।

(२) क० ग० घ० चिह्नितपुस्तकेषु, अयं चतुर्णामितीति श्लोकस्थले, अयं चतुर्णामिति च इन्द्रवायुस्त्रिभिः स्तुतौ। वायुर्द्वितीयपादान्त्येन रथान्विति तु रोदसी। इति पाठो वर्त्तते।

(३) गणस्यैतस्यामेति क० ग० घ० ङ०।

(४) स्तुताः इति क० ग० घ० ङ०।

(५) अथमिति ङ० पुस्तकान्तरच।

(६) चोभावग्नी इति ङ० पुस्तकान्तरच।

(७) पार्थिवमध्यगाविति ख०।

(८) क० ग० घ० ङ० चिह्नितपुस्तकेषु, यदुत्तमे ऋचेऽर्द्धर्चे इत्यादिसार्द्ध-श्लोकस्थले अग्ने मरुद्भिरित्यस्यां मरुद्भिः सह संस्तुताविति श्लोकार्द्धं वर्त्तते।

---

(क) ऋ० ७, ६०, ४। (ख) ऋ० १, १८८, ८।

राजर्षिरभवद्दार्भ्यो रथवीति[क]रिति श्रुतः[१] ।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४८॥
आत्मानं कार्य्यमर्थ[२]ञ्च ख्यापयन् प्राञ्जलिः स्थितः ।
अवृणीतर्षिमात्रेयमार्त्विज्यायार्चनानसम्[ख] ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये ।
श्यावाश्व[ग]श्चात्रिपुत्रस्य पुत्रः खल्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो मुदा ।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्[३] ।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः[४] ॥५३॥
संपुज्यस्व मया राजन्निति याज्यञ्च सोऽब्रवीत् ।
श्यावाश्वाय सुतां दित्सुर्मर्हिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते पुत्रीमहं कन्यां श्यावाश्वाय ददामि हि ।
अनृषिपुत्रो दुर्बलो हि जामाता नावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यहम् ।

(१) श्रुतिरिति ङ० पुस्तकान्तरस्थ ।

(२) कार्य्यवन्तमिति ङ० पुस्तकान्तरस्थ ।

(३) श्यावाश्वश्चात्रिपुत्रस्येति सार्द्धैकश्लोकः क० ख० घ० चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) एतच्छ्लोकार्द्धं क० ख० घ० चिह्नितपुस्तकेषु न दृश्यते ।

(क) ऋ० ५, ६१, १९ । (ख) ऋ० ५, ६४, ७ । (ग) ऋ० ५, ६१, ५ ।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या चेदृक्षो वा भवेत्तथा।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः[1] ॥५७॥
प्रत्याचष्टे स[2] तं राजा सह सम्मन्त्र्य भार्य्यया।
अनृषिर्नो न[3] जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत।
श्यावाश्वस्य तु कन्यायां मनो नैव न्यवर्त्तत[4] ॥५९॥
ततः स्तुतौ[5] निवर्त्याशु तावेतावभिजग्मतुः[6]।
प्रगीयसौ[क][7] तरन्त[ख]श्च पुरुमीळ्ह[ग][8]श्च पार्थिवम्[9] ॥६०॥
तरन्तपुरुमीळ्हौ[10] तु राजानौ वै ददश्व्यृषी[11]।
ताभ्यान्तौ चक्रतुः पूजामृषिभ्यां नृपती[12] स्वयम् ॥६१॥

---

(१) श्यावाश्वाय सुता दित्सुरित्यादिसार्द्धश्लोकत्रयं क० ग० घ० च०-चिह्नितपुस्तकेषु नेष्यते।
(२) प्राबोचत्तथेति ख० ङ० पुस्तकान्तरञ्च।
(३) नैवेति ग०।
(४) न स्म निवर्त्तते इति ख० ङ० पुस्तकान्तरञ्च।
(५) ततस्तौ त्विति क० ग० घ० च०।
(६) ततः स्तुतौ निवर्त्तेते उभावेवाभिजग्मतुरिति ख० ङ० पुस्तकान्तरञ्च।
(७) प्रतीयसौति ङ० पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ०।
(९) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितं।
(१०) तरन्तपुरुमीढाविति ङ० पुस्तकान्तरञ्च।
(११) ददश्विनाविति क० घ० च०।
(१२) तु पतिरिति क० घ० च०।

---

(क) ऋ० ५, ६१, ९। (ख) ऋ० १, १०५, ११। (ग) ऋ० ८, ७१, १४।

ऋषिपुत्त्रं महिष्याश्च दर्शयामास तं[१] नृपः ।
तरन्तानुमतेनैव[२] प्रादाद्बहुविधं वसु ॥६२॥
अजाविकं गवाश्वञ्च श्यावाश्वाय प्रशीयसी[३] ।
अर्चिं[४] याच्यार्चितौ गत्वा पितापुत्त्रौ स्वमाश्रमम् ॥६३॥
अभ्यवादयतामर्चिं[५] महर्षिं दीप्ततेजसम् ।
श्यावाश्वस्य मनस्यासीन्मन्त्रस्यादर्शनादहम् ॥६४॥
न लब्धवानिमां कन्यां हन्त सर्वाङ्गशोभनाम् ।
अथाहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६५॥
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः[६] ।
ददर्श संस्थितान् पार्श्वे तुल्यरूपान्महात्मनः[७] ॥६६॥
समानवयसश्चैव[८] मरुतो रुक्मवचसः ।
तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ॥६७॥
श्यावाश्वो विस्मितोऽपृच्छत्केष्वेति[९] मरुतस्तदा ।

(१) वै इति ख॰ ङ॰ ।
(२) तरन्तानुमता चैवेति क॰ ग॰ घ॰ च॰ ।
(३) प्रश्नीयसीति ङ॰ पुस्तकान्तरञ्च ।
(४) तौ त्विति पाठः सङ्गतः ।
(५) अभ्यवादयतातस्तमिति ङ॰ पुस्तकान्तरञ्च ।
(६) अर्चिं याच्यार्चितौ गत्वेत्यादि प्रादुरासीन्मरुद्गणः इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।
(७) तुल्यरूपानिवात्मनः इति क॰ ख॰ ग॰ घ॰ च॰ ।
(८) चैवमिति ङ॰ पुस्तकान्तरञ्च ।
(९) के स्थेति पाठः समीचीनः । केष्ठेतीति क॰, कोष्ठेतीति घ॰ ।

तेतस्तु महतो देवानृषिस्तानन्वबुध्यत[1] ॥६८॥
य ईं वहन्त इत्यृग्भिः षड्भि[2] स्तुष्टाव तांस्तथा।
अतिक्रमं हितग्ध्यर्षिर्मेने विपुलमात्मनः ॥६९॥
यत्न[3] दृष्ट्वैव तुष्टाव यच्च[4] केष्वेति[5] पृष्टवान्।
स्तुताः स्तुत्यानया प्रीता गच्छन्तः पृश्निमातरः[क] ॥७०॥
अवमुच्य स्ववक्षोभ्यो[6] रुक्मं तस्मै तदा ददुः।
महत्सु तु प्रयातेषु श्यावाश्वस्तु महायशाः[7] ॥७१॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा।
स मद्य ऋषिरात्मानं विवचूरथवीतये[8] ॥७२॥
एतं मे स्तोममित्यृग्भ्यां[9] दौत्ये[10] रात्र्यौं न्ययोजयत्।
रथवीतिं तपस्यन्तं[11] समीक्ष्यार्षेण चक्षुषा ॥७३॥

---

(१) यमस्तून्नबुध्यतेति क॰ ग॰ घ॰ च॰।
(२) बुद्धेति क॰ ग॰ घ॰ च॰।
(३) यान्न इति क॰ घ॰ च॰।
(४) याश्वेति क॰ ग॰ घ॰ च॰।
(५) केष्ठेतीति क॰, केष्ठेतीति ङ॰।
(६) ध्वामुच्य स्वकण्ठेभ्यः इति ख॰, ध्वामुच्यते स्वकण्ठेभ्यः इति ङ॰।
(७) महातपा इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) प्रवव्रश्चरथवीतये इति क॰ ग॰ घ॰ च॰।
(९) इत्याभ्यामिति क॰ ग॰ घ॰ च॰।
(१०) दूत्ये इति ख॰ पुस्तकान्तरञ्च।
(११) रथवीतिमपश्यन्तीमिति ख॰ ङ॰।

---

(क) ऋ॰ ५, ६१, १०।

स्रवतामपि गर्भाणां दृष्टं तदनुमन्त्रणम्[१]।
भाववृत्तं तु तत्तस्यास्तयारूपं हि दृश्यते ॥८५॥
जरायुगर्भशब्दाभ्यामेतद्रूपं हि दृश्यते[१]।
मह्ये उपस्थे[२] सावित्रं युञ्जतेच्छावदः[३] स्तुतः ॥८६॥
पर्जन्यो वक्तिति लस्मिन्[४] पृथिवी मध्यमा तु[५]वाक्[६]।
श्रद्धा नो देवसवितरियं दुःस्वप्ननाशिनी[७] ॥८७॥
वारुणन्तु प्रसम्राजे यद्वैन्द्राग्नमुत्तरम्[८]।
विष्णुं न्यङ्ग[९]न्परस्मेति मारुतं सूक्तमुत्तरम्[१०] ॥८८॥
एतया मरुदाख्यातं यौर्नेन्द्रे प्रतिपूर्व्वकम्[११]।

---

(१) स्रवतामपि गर्भाणामित्यादिसार्द्धकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु नोपलभ्यते।

(२) मह्योपस्थेवीति क॰ घ॰ च॰।

(३) सावित्रे युञ्जतेच्छेति वै इति क॰ ग॰ घ॰ च॰।

(४) पर्ज्जन्यस्तु वक्तिस्थेतीति ख॰ पुस्तकान्तरञ्च।

(५) न्विति ग॰।

(६) स्तुतेति ख॰ पुस्तकान्तरञ्च।

(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।

(८) उत्तरमित्यत्र उत्तममिति क॰, इन्द्राग्नीन्द्राग्नमुच्यते इति ख॰, मिन्द्राग्नीन्द्राग्नमुच्यते इति ख॰ पुस्तकान्तरञ्च।

(९) विष्णुं विप्रमिति ख॰ पुस्तकान्तरञ्च।

(१०) उत्तममिति ख॰।

(११) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते।

श्रीसूक्तमाशीर्वादस्तु[१] स्त्रीपुत्राणां पराणि तु[२] ॥८९॥
तत्याद्या[३]लक्ष्म्यपनुद्[४] मग्निस्तत्र[५] निपातभाक्।
प्रजावान् जीवपुत्त्रो[६] वा गर्भकर्म्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्यः[७] संस्रवन्तीति संस्तुताः[८]।
आशीर्वादेषु संज्ञासु कर्म्मसंख्यास्तु देवताः[९] ॥९१॥
निपातभाग् लिङ्गवाक्यात्[१०] परीचेतेह मन्त्रवित्।
मन्त्रप्रयोगमन्त्रयोः[११] प्रयोगो[१२] बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्त्विति ङ० पुस्तकान्तरञ्च।
(२) स्त्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, स्त्रीः पुत्राणां पराश्च षट् इति ङ० पुस्तकान्तरञ्च।
(३) तस्यादेति क० घ० च०।
(४) लक्ष्म्यपनिर्नोदः इति क० घ० च०, तस्याद्यालक्ष्मीं पतेर्नोदे इति ख०, अलक्ष्म्यपनिर्नोदे इति ङ० पुस्तकान्तरञ्च।
(५) स्त्वत्रेति ख० ङ०।
(६) प्रजावज्जीवपुत्र० इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ०।
(७) यथाश्विन्यः इति ख० ग०।
(८) संस्तुताविति ङ०।
(९) कर्म्मसंख्या तु देवतेति ख०।
(१०) लिङ्गवाक्येति ख० ग०।
(११) मन्त्रप्रयोगमन्त्राणामिति ग०।
(१२) प्रयोगे इति ग०।

रम्ये हिमवतः पृष्ठ एष चेतीति चाब्रवीत्।
ऋषेर्नियोगमाज्ञाय देव्या राज्ञा प्रचोदितः।
आदाय कन्यां तां दार्भ्य उपेयायार्चनानसम् ॥७४॥
पादौ तस्योपसङ्गृह्य स्थितः[१] प्रह्वः कृताञ्जलिः।
रथवीतिरहं दार्भ्य इति नाम शशंस च ॥७५॥
मया सङ्गति[२]मिच्छन्तं त्वां प्रत्याषेधिषं यत्पुरा।
तत् क्षमस्व नमस्तेऽस्तु मा च मे भगवन् क्रुधाः[३] ॥७६॥
ऋषेः पुत्रः स्वयमृषिः[४] पितासि भगवन्नृषेः।
हन्त प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत्[५] ॥७७॥
पाद्यार्घ्यमधुपर्कैश्च पूजयित्वाथ तं[६] नृपः।
शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति ॥७८॥
प्रयीयमीं[७] तरन्तश्च पुरुमीळ्ह[८]श्च पार्थिवम्।
षड्भिः सनदिति स्तुत्वा जगामर्षिरपि स्वयम्[९] ॥७९॥

---

(१) स्थित्वेति ख॰ ग॰ पुस्तकान्तरञ्च।
(२) संयोगमिति ख॰ ग॰ पुस्तकान्तरञ्च।
(३) क्रुधः इति ख॰ ग॰ पुस्तकान्तरञ्च।
(४) ऋर्षिरिति ख॰ ग॰ पुस्तकान्तरञ्च।
(५) स्नुषाम्लेऽस्त्विति चाब्रवीदिति ख॰ ग॰ पुस्तकान्तरञ्च।
(६) चार्चनाना स्वयमिति क॰ ग॰ घ॰।
(७) प्रत्तोदस्तोमिति ग॰ पुस्तकान्तरञ्च।
(८) पुरूळ्हमिति ग॰ पुस्तकान्तरञ्च।
(९) श्वयमिति क॰ ग॰ घ॰ च॰।

ऋतेन मैत्रावरुणान्येकादश्यर्धपराणि तु ।
षडाश्विनानि[1] गर्भार्था पञ्चर्चूपनिषत्स्तुतिः[2] ॥८०॥
अप्रकृतोऽपराधे तु[3] विफले दारसंयुते ।
ऋषिः कृतो[4]ऽश्वमेधेन भारतेनेति वै श्रुतिः[5] ॥८१॥
ततोऽष्टमे[6]ऽपराधे तु वृत्रद्रोण्यां स पार्थिवः ।
ऋषिं[7]क्षेत्र[8] विनिक्षिप्य स्कन्नं रात्रौ न्यधारयत्[9] ॥८२॥
सोऽश्विनाविति सूक्तेन तुष्टावर्षिः शुभस्पती ।
तौ तं तस्मात् समुद्धृत्य चक्रतुः सफलं पुनः ॥८३॥
ऋचस्तस्यैव गर्भार्थं स्वपत[10]स्तस्य गर्भवत् ।
यथा वात इति ज्ञेये लक्ष्यिष्यामितरे ऋचौ[11] ॥८४॥

---

(१) सप्ताश्विनावीति क० ग० घ० च० ।
(२) गर्भार्थं पञ्चोपनिषत्स्तुतिरिति ग० । स्तुतिरित्यत्र तुवौति क० घ०, तुषौति च० ।
(३) सप्त कृत्वापराधान् वै इति क० घ० च०, सप्तकृतोऽपराधान् वै इति ग० ।
(४) ततः इति ङ० पुस्तकान्तरञ्च, ऋषौ कृत्वेति ग० ।
(५) नः श्रुतमिति ङ० पुस्तकान्तरञ्च ।
(६) तमष्टमे इति क० ग० घ० च० ।
(७) ऋषीनिति ङ० पुस्तकान्तरञ्च ।
(८) ऋषीसेमा इति घ० च० ।
(९) रात्रौ रात्रौ न्याधारयदिति क० घ० च० ।
(१०) चिरस्तस्यैव गर्भार्थंस्वपतः इति ङ० पुस्तकान्तरञ्च ।
(११) क्षेमावक्षिष्यामितरौ वृषाविति ख० ङ० पुस्तकान्तरञ्च ।

स्रवतामपि गर्भाणां दृष्टं तदनुमन्त्रणम्।
भाववृत्तं तु तत्तस्यास्तथारूपं हि दृश्यते ॥८५॥
जरायुगर्भगब्दाभ्यामेतद्रूपं हि दृश्यते[1]।
मह्ने उपस्थे[2] सावित्रं युञ्जतेत्स्वावदः[3] स्तुतः ॥८६॥
पर्जन्यो बलितीति त्वस्मिन्[4] पृथिवी मध्यमा तु[5]वाक्[6]।
श्रद्धा नो देवमवितरियं दुःस्वप्ननाशिनी[7] ॥८७॥
वारुणन्तु प्रथमाजे यद्भमैन्द्राग्नमुत्तरम्[8]।
विष्णुं न्यङ्ग[9]म्परमेति मारुतं सूक्तमुत्तरम्[10] ॥८८॥
एतया मरुदाख्यातं चौर्नैन्द्रे प्रतिपूर्व्वकम्[11]।

---

(१) स्रवतामपि गर्भाणामित्यादिसार्द्धैकश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु नापश्यत।
(२) मह्नीयसेतीति क० घ० च०।
(३) सावित्रे युञ्जतेत्स्त्वेति वै इति क० ग० घ० च०।
(४) पर्ज्जन्यस्तु बलित्येतीति ख० पुस्तकान्तरञ्च।
(५) न्विति ग०।
(६) स्तुतेति ख० पुस्तकान्तरञ्च।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(८) उत्तरमित्यत्र उत्तममिति क०, इन्द्राभैन्द्राग्नमुच्यते इति ख०, मिन्द्रापैन्द्राग्नमुच्यते इति ख० पुस्तकान्तरञ्च।
(९) विष्णुं पिङ्गमिति ख० पुस्तकान्तरञ्च।
(१०) उत्तममिति ख०।
(११) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।

श्रीसूक्तमाशीर्वादस्तु[1] स्त्रीपुत्राणां पराणि तु[2] ॥८९॥
तत्स्याद्वा[3]लक्ष्म्यपनुद्[4] मग्निस्तत्र[5] निपातभाक्।
प्रजावान् जीवपुत्रो[6] वा गर्भकर्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्यः[7] संस्रवन्तीति संस्तुताः[8]।
आशीर्वादेषु संज्ञासु कर्मसंस्थास्तु देवताः[9] ॥९१॥
निपातभाग् लिङ्गवाक्यात्[10] परीचेतेह मन्त्रवित्।
मन्त्रप्रयोगमन्त्रयोः[11] प्रयोगो[12] बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्त्विति ङ० पुस्तकान्तरञ्च।
(२) श्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, स्त्रीः पुत्राणां पराश्च षट् इति ङ० पुस्तकान्तरञ्च।
(३) तस्यादेति क० घ० च०।
(४) लक्ष्म्यापनिर्नोद इति क० घ० च०, स्याद्यालक्ष्मीं पतेर्नोदे इति ख०, अलक्ष्म्यपनिर्नोदे इति ङ० पुस्तकान्तरञ्च।
(५) स्त्वचेति ख० ङ०।
(६) प्रजावज्जीवपुत्र इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ०।
(७) पयास्विन्यः इति ख० ग०।
(८) संस्तुताविति ङ०।
(९) कर्मसंस्था तु देवतेति ख०।
(१०) लिङ्गवाक्येति ख० ग०।
(११) मन्त्रप्रयोगमन्त्राणामिति ग०।
(१२) प्रयोगे इति ग०।

विधिस्तयोः परीक्षा[१] स्यान्मन्त्राः स्युरभिधायकाः[२] ।
तस्मात्तेन विसंवादो मन्त्राणां तद्गतानि तु ॥९३॥
गुणाभिधायकानि स्युः सविज्ञानपदानि तु ।
मन्त्रेषु गुणभूतेषु प्रधानेषु च कर्मसु ॥९४॥
प्रधानगुणभूताः स्युर्देवता इति गम्यते ।
त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ॥९५॥
आहरत्सहितः साध्यैर्विश्वैर्देवैः सहेति च ।
तत्र वाग्दीक्षणीयायामाजगामाशरीरिणी[३] ॥९६॥
तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च ।
शुक्रं चस्कन्द तद्वाभ्यामग्नौ प्रास्त[४] यदृच्छया ॥९७॥
ततोऽर्चिर्भ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा[क][५] ऋषिः ।
प्रजापतिस्तौ दृष्ट्वा दृष्ट्वा वागभ्यभाषत ॥९८॥
आभ्यामृषिस्तृतीयोऽपि भवेद्वैव मे सुतः ।
प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम् ॥९९॥
ऋषिरत्रिस्ततो जज्ञे सूर्यानलसमद्युतिः ।
योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ॥१००॥

(१) परीक्ष्य इति ख० ।
(२) अभिधानकाः इति ख०, अभिधानिका इति ग० ।
(३) शरीरिणीति शुद्धः पाठः ।
(४) प्रास्यमिति ख०, प्रास्येति ग० ।
(५) अङ्गारस्याङ्गिरा इति ख०, अङ्गारेभ्यङ्गिरा इति ग० ।

(क) ऋ० ६, ११, ३ ।

बृहस्पतेर्भरद्वाजो विदथीति[१] य उच्यते[२] ।
मरुत्वानीद्गुरुर्यस्य[३] स एवाङ्गिरसो नपात्[क] ॥१०१॥
सपुत्रस्य तु तस्येद[४] मण्डलं षष्ठमुच्यते ।
त्वं ह्यग्न इति तत्रादावाग्नेयानि त्रयोदश ॥१०२॥
सूक्तानि त्रीणि मूर्द्धानमग्नेर्वैश्वानरस्य तु ।
एकान्नविंशतिश्चैव[५] पिबेन्त्यैन्द्राण्य[६]तः परम् ॥१०३॥
अग्ने सचे यदित्यस्यां द्वौ देवौ तु[७] निपातितौ ।
प्रोतये नूम[८] इत्येते वैश्वदेव्यावृचौ तु ते[९] ॥१०४॥
ऋग्द्वितीया पदश्चान्त्यमैन्द्रमेति[१०] गवां स्तुतिः ।
आसस्त्राणास[ख] इत्यस्यां वायुरिन्द्रस्य संस्तुतौ[११] ॥१०५॥
इन्द्रः प्राधान्यतो वात्र स्तुतो वायुर्निपातभाक् ।

---

(१) विदथीतीति ङ० ।
(२) प्रजावान् जीवपुत्रो वा इत्यादि विदथीति य उच्यते इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(३) भुवन्यस्येति क० घ० च०, गुरोर्यस्येति ख० ग० ।
(४) ससपुत्रस्य तस्यैतदिति क० ग० घ० च० ।
(५) एकाग्निर्त्रिंशद्देवात्रेति ख०, एकान्नत्रिंशद्देवात्रेति ङ० । एकोनविंशतिरिति भवितुमर्हति ।
(६) पिबन्त्यैन्द्राणीति पाठः शुद्धः ।
(७) देवौ याविति क० ग० घ० च० ।
(८) नभ इति क० घ० च० ।
(९) स्तुते इति ङ० ।
(१०) चेतीति ग० ।
(११) इन्द्रवायू सह स्तुताविति ङ० पुस्तकान्तरस्य ।

---

(क) ऋ० १, १४३, १ । (ख) ऋ० ६, ३७, ३ ।

अयं देवस्तृचं सौम्यमैन्द्रमेके प्रचक्षते[1] ॥१०६॥
शरीरं चक्षुरित्यस्या ऋचोऽधीति[2] ऋबोः[क] स्तुति.[3]।
पितरं स्तौति शयु[ख]श्च ऋचस्यान्ते पदे स्वयम्[4] ॥१०७॥
स्वादु[ग]ष्किलायमित्येताः पञ्चर्चः सौम्य एव वा[5]।
इन्द्रः प्रधानतो वात्र स्तुतः सोमो निपातभाक् ॥१०८॥
इन्द्रस्यैन्द्रनिपातोऽयं स्तुयन्ते छैतरेयके[6]।
अगव्यूति[घ] स्तौति देवान् पादो भूमिमथोत्तरः ॥१०९॥
बृहस्पति तृतीयोऽस्तौत्[7] लिन्द्र[8]मेवोत्तम पदम्।
स्वपिस्तु तौ तथेत्युक्त्वा पायु[ङ] पुत्त्रमभाषत ॥११०॥
अधर्पणीयौ शत्रूणां कुरुष्वेतौ[9] नृपाविति।
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥
जीमूतस्येति[10] सूक्तेन पृथक्तेनान्वमन्त्रयत्।

(१) इन्द्र प्राधान्यतो वाचेति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(२) ष्यधीतिरिति विसर्गयुक्तपाठः शुद्धः।
(३) य एवानयदिति तस्य ऋचोऽधीति ऋभुस्तुतिरिति क० ग० घ० च०।
(४) ऋचस्यान्ते पदे स्वकमिति ख० ङ० पुस्तकान्तरञ्च।
(५) इति तु सौम्यः पञ्चर्च उत्तरः इति क० ग० च०।
(६) इन्द्रः प्रधानतो वाचेत्यादि स्तूयन्ते छैतरेयके इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते। स्तूयते इति शुद्धः पाठः।
(७) तृतीयस्त्विति क० ङ० पुस्तकान्तरञ्च।
(८) मिन्द्रमिति पाठः साधुः।
(९) कुरु पुत्त्रेति ङ० पुस्तकान्तरञ्च।
(१०) जीमूतोयेनेति क० घ० च०, जीमूतस्येवेति ग०।

(क) ऋ० ६, ४५, ३३। (ख) ऋ० १, १४, ६। (ग) ऋ० ६, ४४, २१।
(घ) ऋ० ६, ४७, २०। (ङ) ऋ० २, २, ४।

प्रथमा त्वस्य सूक्तस्य योद्धारं स्तौति वर्म्मिणम् ॥११२॥
धनुः स्तौति[1] द्वितीया तु तृतीया ज्याभिमन्त्रिणी[2]।
स्तौति चार्त्नी[क] चतुर्थी च[3]गिषुधिं स्तौति पञ्चमी ॥११३॥
अर्द्धेन[4] सारथिं षष्ठ्या रश्मयोऽर्द्धेन संस्तुताः।
अश्वांस्तु सप्तमी स्तौति आयुधागारमष्टमी ॥११४॥
नवमी रथगोपांस्तु दशमी रणदेवताः।
इषुमेकादशी[5] स्तौति द्वादशी कवचस्तुतिः ॥११५॥
त्रयोदशी कशां स्तौति हस्तत्राणं चतुर्दशी।
प्रथमे पञ्चदश्यास्तु पादे दिग्ध[6] इषुः स्तुतः[7] ॥११६॥
अयोमुखी द्वितीये तु अर्द्धेऽस्त्वं[8] वारणं परम्[9]।
षोडश्यां[10] त्वस्य सूक्तस्य धनुर्मुक्त इषुः स्तुतः ॥११७॥
सप्तदश्यां तु युद्धादिः[11]कवचस्य च बन्धनं[12]।

(१) धनुश्चेति क॰ ख॰ ग॰।
(२) ज्याभिमन्त्रिणीति क॰ ख॰ ग॰।
(३) आर्त्न्यावार्त्नी चतुर्थी चेति क॰ म॰ ख॰ ग॰।
(४) अर्द्धेनेति क॰ ख॰ ग॰।
(५) इषुधिमेकादशीति क॰ ख॰ ग॰, इषुमेकादशीति म॰।
(६) दिग्धः इति म॰।
(७) इषुस्तुतः इति म॰ ख॰।
(८) अर्द्धेऽस्त्वमिति ग॰।
(९) परे इति ख॰।
(१०) षोडश्येति क॰ म॰ ख॰ ग॰।
(११) युद्धदेशेति क॰ ख॰ ग॰, योद्धादेरिति म॰।
(१२) बन्धनः इति क॰ म॰ ख॰ ग॰।

(क) ऋ॰ ६, ७५, ४।

अयं देवस्तृचं सौम्यमैन्द्रमेके प्रचक्षते[१] ॥१०६॥

शरीरं चक्षुरित्यस्यां तृचोऽधीति[२] तृचोः[क] स्तुतिः[३]।

पितरं स्तौति शंयु[ख]श्च तृचस्यान्ते पदे स्वयम्[४] ॥१०७॥

स्वादु[ग]ष्किलायमित्येताः पञ्चर्चः सौम्य एव वा[५]।

इन्द्रः प्रधानतो वात्र स्तुतः सोमो निपातभाक् ॥१०८॥

इन्द्रश्चैन्द्रनिपातोऽयं स्तूयन्ते शैतरेयके[६]।

अगव्यूति[घ] स्तौति देवान् पादौ भूमिमथोत्तरः ॥१०९॥

बृहस्पतिं तृतीयोऽस्तौत्[७] लिन्द्र[८]मेवोत्तमं पदम्।

ऋषिस्तु तौ तथेत्युक्त्वा पायुं[ङ] पुत्त्रमभाषत ॥११०॥

अधर्षणीयौ शत्रूणां कुरुष्वैतौ[९] नृपाविति।

पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥

जीमूतस्येति[१०] सूक्तेन पृथक्तेनाभ्यमन्त्रयत्।

---

(१) इन्द्रः प्राधान्यतो वात्रेति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

(२) च्यधीतिरिति विसर्गयुक्तपाठः शुद्धः।

(३) य ष्मानयदिति त्वस्य तृचोऽधीति तृचस्तुतिरिति क० ग० घ० च०।

(४) सूक्तस्यान्ते पदे स्वकमिति ख० ङ० पुस्तकान्तरञ्च।

(५) इति तु सौम्यः पञ्चर्च उत्तरः इति क० ग० च०।

(६) इन्द्रः प्रधानतो वात्रेत्यादि स्तूयन्ते शैतरेयके इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते। स्तूयते इति शुद्धः पाठः।

(७) तृतीयस्त्विति क० ङ० पुस्तकान्तरञ्च।

(८) त्वैन्द्रमिति पाठः साधुः।

(९) कुरु पुत्त्रेति ख० पुस्तकान्तरञ्च।

(१०) जीमूतीयेनेति क० घ० च०, जीमूतस्येवेति ग०।

---

(क) ऋ० ६, ४५, ३३। (ख) ऋ० १, ३४, ६। (ग) ऋ० ६, ४४, २१। (घ) ऋ० ६, ४७, २०। (ङ) ऋ० २, २, ४।

[१]प्रसङ्गादिह[१] याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः[३]।
प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्[४] ॥१२५॥
तस्य देव्योऽभवञ्जाया[५] दाक्षायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः[६]॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रुश्चेवेति दुहितॄः कश्यपाय ददौ स च[७] ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्[८] सुतान्।
भगश्चैवार्यमांश[क]श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख॰ घ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—
ऋषिरभ्यमितुष्टाव दानं तत्र च तस्य तु।
ऋचैकया ददौ धर्मे दत्तं सङ्कीर्त्तयन् स्वयम्॥
इत्यधिकं पठितम्।
(२) प्रसङ्गा त्विहेति क॰ ग॰ घ॰ च॰।
(३) राथीतरसुताविति क॰ घ॰ च॰।
(४) मुनिरिति क॰ ग॰ घ॰ च॰।
(५) जाता इति क॰ घ॰ च॰।
(६) विशाविति ख॰।
(७) अदितिरित्यादिसार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(८) द्वन्द्वशोऽजनयदिति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ २, १, ४।

स्तुतिरष्टादशी ज्ञेया युयुत्सोर्दिव्यगुत्तमा(१) ॥११८॥
आशास्ते चोत्तमे पादे ह्यपि(२)रात्मन आशिषः।
सूक्तेनानेन तु स्तुत्वा सञ्ज्ञामाज्ञाप्ययित्तयोः ॥११९॥
ततः(३) प्रस्थापयामास पुनर्वारशिखान्(४) प्रति।
एतद्वचसे चतसृभी राज्ञोः साहाय्यकाङ्क्षया ॥१२०॥
भरद्वाजोऽभितुष्टाव प्रीतस्तेन पुरन्दरः।
अभ्यावर्त्तिनमासाद्य हर्युपीयानदीतटे ॥१२१॥
सहितश्चायमानेन(क) जघानैतान् शचीपतिः(५)।
एवं(६) वारशिखा(७)न्छित्वा तावभ्यावर्त्ति(८)सार्ञ्जयौ(ख) ॥१२२॥
भरद्वाजाय गुरवे ददतुर्विविधं वसु।
भरद्वाजस्य गर्गस्य दृष्टाविन्द्रेण वै पथि ॥१२३॥
द्वौ च(९) प्रस्तोक(ग) इत्याभिर्दानं तस्मै(१०) शशंसतुः।

(१) स्तुतिरुत्तमेति क० ग० घ० च०।
(२) ह्यपिरिति ङ०।
(३) तयोरिति क० घ० च०।
(४) वारशिखानिति ग०।
(५) एतद्वचसे चतसृभिरित्यादि जघानैतान् शचीपतिरित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(६) तौ त्विति क० ग० घ० च०।
(७) वारशिखानिति ग०।
(८) तावभ्यावर्त्तिति क० ग० घ० च०।
(९) द्वयानिति क० ग० घ० च०।
(१०) तस्मै इति क० ग० घ० च०।

(क) ऋ० ६, २७, ८। (ख) ऋ० ६, ४७, २५। (ग) ऋ० ६, ४७, २२।

[१]प्रसङ्गादिह[२] याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः[३]।
प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्[४] ॥१२५॥
तस्य देव्योऽभवञ्जाया[५] दाचायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः[६]॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रुश्चैवेति दुहितॄः कश्यपाय ददौ स च[७] ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्[८] सुतान्।
भगश्चैवार्य्यमांश[क]श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—

ऋषिरप्यभितुष्टाव दानं तच्च च तस्य तु।
ऋचैकया दयां अग्ने दत्तं सङ्कीर्त्तयन् स्वयम् ॥

इत्यधिकं पठितम्।

(२) प्रसङ्गा त्विहेति क० ग० घ० च०।

(३) राथीतरस्तुताविति क० घ० च०।

(४) मुनिरिति क० ग० घ० च०।

(५) जाता इति क० घ० च०।

(६) विगाविति ख०।

(७) यदितिरित्यादिसार्द्धैकश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।

(८) द्वन्द्वशोऽजनयदिति क० ग० घ० च०।

---

(क) ऋ० २, १, ४।

धाता चैव विधाता च विवस्वांश्च महाद्युतिः ।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते[१] ॥१२०॥
द्वन्द्वं तयास्तु तज्जज्ञे[२] मित्रश्च वरुणश्च ह[३] ।
तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ॥१२१॥
रेतश्चस्कन्द कुम्भे तु[४] न्यपत[५]द्वासतीवरे ।
तेनैव तु मुहूर्तेन वीर्य्यवन्तौ तपस्विनौ ॥१२२॥
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ।
बहुधा पतिते शुक्रे कलशेऽथ जले स्थले ॥१२३॥[६]
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः ।
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः[६] ॥१२४॥
उदियाय ततोऽगस्त्यः शम्या[क]मात्रो महायशाः[७] ।
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ॥१२५॥
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि[८] मीयते ।

(१) धातचैवार्य्यमाश्चैवेत्यादिसार्द्धश्लोकः ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(२) जज्ञाते इति च० ।
(३) मित्रस्य वरुणस्य चेति क० ख० ग० घ०, यश्चेति ख० ग० ।
(४) तत्कुम्भे इति ग० ङ० पुस्तकान्तरयोः ।
(५) न्यपतदिति ख० ङ० पुस्तकान्तरयोः ।
(६) बहुधा पतिते शुक्रे इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न पठित ।
(७) महायशा इति ख० ङ० पुस्तकान्तरयोः ।
(८) कुम्भे मानेति क० घ० च० ।

(क) ऋ० १, ८४, ३ ।

कुम्भ इत्यभिधानन्तु परिमाणस्य लक्षणम्[1] ॥१२६॥
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः।
सर्व्वतः[2] पुष्करं तत्र विश्वेदेवा अधारयन् ॥१२७॥
उत्थाय सलिलात्तस्मादथ तेपे महत्तपः।
नामास्य गुणतो जज्ञे वसतेः श्रेष्ठकर्मणः[3] ॥१२८॥
अदृश्यमृषिभिर्देन्द्र[4] सोऽपश्यत्तपसा पुरा।
सोमभागानयो[5] तस्मै प्रोवाच हरिवाहनः ॥१२९॥
ऋषयो वा इन्द्रमिति ब्राह्मणात्तद्धि दृश्यते[6]।
वसिष्ठस्य वसिष्ठास्य[7] ब्राह्मणा वै ततोऽभवन् ॥१४०॥
सर्व्वकर्म्मसु यज्ञेषु दीक्षणीयास्ततोऽभवन्[8]।
तस्मादद्यापि[9] वासिष्ठाः सदस्याश्चिह कर्म्मणि[10] ॥१४१॥

---

(१) लक्ष्यते इति क॰ घ॰ च॰।

(२) सर्व्वत्रेति ख॰ ग॰ घ॰ च॰।

(३) श्रेष्ठकर्म्मणः इति पाठः साधुः। श्रेष्ठकर्म्मणेति ङ॰ पुस्तकान्तरस्य।

(४) चैन्द्रमिति ङ॰ पुस्तकान्तरस्य।

(५) सोमभागांस्तत इति ख॰ ङ॰ पुस्तकान्तरस्य।

(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।

(७) वासिष्ठास्य वसिष्ठस्येति पाठः सङ्गतः। वसिष्ठास्य वसिष्ठास्येति क॰ च॰, वसिष्ठास्य वसिष्ठास्येति ग॰ घ॰।

(८) सर्व्वमर्म्मसु यज्ञेषु दक्षिणीयतमास्तथेति क॰ घ॰ च॰।

(९) येऽद्यापीति क॰ ग॰ घ॰ च॰।

(१०) वसिष्ठाः सदस्याः स्युस्तु कर्म्मस्विति क॰ ग॰ घ॰ च॰।

अर्हयेद्[१] दक्षिणाभिस्तान् भाल्लवेयी श्रुति[२]स्त्रियम्[३]।
ऋषिस्तु मैत्रावरुणिः सूक्तैः षोडशभिः परैः ॥१४२॥
तुष्टाव चाग्नि[क]मित्यग्निमाप्रस्तत्र जुषस्व नः[ख]।
प्राग्नये[ग]ऽथ प्रसम्राजो[घ] द्वितीयं प्राग्नये[ङ] त्वचम् ॥१४३॥
वैश्वानरीयाण्येतानि[४] त्वे[च]न्द्राणि पराण्यतः।
दश पञ्च च सूक्तानि निपातो मरुतां स्तुतिः ॥१४४॥
नकिः सुदास[छ] इत्यस्यां दानं पैजवनस्य तु।
वसिष्ठेन चतुर्थ्यग्नि[५]र्द्दै नप्तु[ज]रिति कीर्त्तितम् ॥१४५॥
संवादः सूक्तमैन्द्रं[६] वाश्विन्यं तत्तु[७] प्रचक्षते।
वसिष्ठागस्त्ययोरत्र कीर्त्यते तनयैः सह ॥१४६॥
इन्द्रेण चैव संवादो महिमा जन्म कर्म च।

---

(१) पूजयेदिति ख० ङ० पुस्तकान्तरञ्च।
(२) स्तुतिरिति क० घ० च०।
(३) ऋद्ध्यर्षे भाल्लवी श्रुतिरिति ख० ङ०।
(४) वैश्वानरीयमित्येतदिति क० घ० च०।
(५) चतुर्भिस्त्विति क० ग० घ० च०।
(६) संवादमैन्द्रसूक्तमिति ङ० पुस्तकान्तरञ्च, संवादे सूक्तमैन्द्रे इति ख०।
(७) वाश्विन्यं वस्त्विति क० ग० घ० च०।

---

(क) ऋ० ७, १, १। (ख) ऋ० ७, २, १। (ग) ऋ० ७, ५, १।
(घ) ऋ० ७, ६, १। (ङ) ऋ० ७, १३, १। (च) ऋ० ७, १८, १।
(छ) ऋ० ७, ३२, १०। (ज) ऋ० ७, १८, २२।

पराणि प्रे(क)ति चत्वारि वैश्वदेवानि यानि(१) तु ॥१४७॥
स्तौत्यृगर्द्धा(ख)महिं तत्र मानो(ग)ऽहिर्बुध्न्य(घ) एव च ।
अहिराहन्ति मेघान् स एति वा तेषु मध्यमः ॥१४८॥
योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते(२) ।
उदु ष्य(ङ)सवितुः सूक्तं(३) प्रश्नो (च)वाजिनदेवताः(४) ॥१४९॥
हृचो(छ)ऽर्द्धर्चस्य पादोऽस्य प्रथमस्यामृचि स्तुतः(६) ।
पादस्यैव तृतीयोऽस्य प्रथमायामृचि स्तुतः(७) ॥१५०॥
यथार्द्धर्चो भगमुग्र(ज)स्तथा नूनं भगो(झ)ऽपि च ।
स हि रत्नानि सविता सुवातीति भगः स वा(८) ॥१५१॥

---

(१) तथेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) अहिराहन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।
(३) सूक्ते इति ख॰ ङ॰ ।
(४) वाजिनदेवत इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(५) हृचः इति ग॰ ।
(६) हृचोऽर्द्धस्य भगोऽस्य भगमुग्र इति ऋतिरिति ख॰ ङ॰ पुस्तकान्तरञ्च । ऋतिरित्यत्र ऋतः इति ग॰ ।
(७) पञ्चम्यामहिर्दैवतः इति क॰ ग॰ घ॰ च॰ ।
(८) एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापठ्यत ।

---

(क) ऋ॰ ७, ३६, १ । (ख) ऋ॰ ७, ३४, १६ । (ग) ऋ॰ ७, ३४, १७ । (घ) ऋ॰ ७, ३४, १७ । (ङ) ऋ॰ ७, ३८, १ । (च) ऋ॰ ७, ३८, ७ । (छ) ऋ॰ ७, ३८, ६ । (ज) ऋ॰ ७, ४१, ५ ।

वैश्वदेवानि पञ्चोर्ध्वपञ्चर्चो भगदेवताः[1]।
प्रातर्जित[क]मुपघोऽन्त्या द्रष्टुं च स्तौत्याग्नि[2]रेव वा ॥ १५२॥
एके तु प्रात[ख]रित्यस्यां भगमेव[3] प्रचक्षते।
आद्यान्त्ये ते तु ऋषयः कीर्त्तयन्ति[4] पृथक्कृतः ॥ १५३॥
सूक्तेषु[5] देवता मान्या मान्यास्तत्र स्तुवन्ति[6] च।
सालोक्यात्[7]साहचर्य्याद्वा संस्तवादथ वा पुनः ॥ १५४॥
गणस्थानाद्भक्तितो वा कीर्त्यन्तेऽन्यास्तु देवताः।
दाधिक्रमथ सावित्रं रौद्रमित्यनुपूर्वशः ॥ १५५॥
दधिक्रां[ग] प्रथमायान्तु[8] देवताः परिकीर्त्तिताः।
ता ज्ञेया आप[घ] आप्यं स्यादार्भवः प्रथमस्तृचः ॥ १५६॥
उत्तमा वैश्वदेवी वा आर्भवी वा निगद्यते[9]। *

---

(१) पञ्चोर्ध्वः पञ्चर्चो भगदेवतः इति क॰ ख॰ ग॰ घ॰ च॰।
(२) द्रष्टुं स्तौत्याग्नीरिति क॰ घ॰ च॰, दृष्टवानाग्नीरिति ङ॰ पुस्तकान्तरञ्च।
(३) प्रातरित्येतां भागमेवेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) आद्यान्त्येषु तु ह्येषु तु यत्कीर्त्तयन्तीति ङ॰ पुस्तकान्तरञ्च।
(५) सूक्तेऽस्मिन्निति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(६) स्तन्या अन्यास्तत्र भवन्तीति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(७) कालादिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) प्रथमायास्त्विति क॰ ग॰ घ॰ च॰।
(९) वैश्वदेवी तु समुद्रज्येष्ठेत्यपां स्तुतिरिति क॰ घ॰ च॰।

---

(क) ऋ॰ ७, ४१, २। (ख) ऋ॰ ७, ४१, १। (ग) ऋ॰ ७, ४४, १। (घ) ऋ॰ ७, ४७, १।

# अथ षष्ठोऽध्यायः ।

आ मा(क)मिति तु सूक्तेन प्रत्यृचं देवताः स्तुताः ।
मित्रावरुणावग्निश्च देवा नद्यस्तथैव च(१) ॥१॥
द्वावादित्यदेवत्यौ रोदस्योः प्रे(ख)ति यस्तृचः ।
वास्तोष्पत्यस्ततस्तिस्र(२) प्रस्वापिन्य ऋचः स्मृताः(३) ॥२॥
परं(४) चत्वारि सूक्तानि मारुतानि क ईं(ग)मिति ।
तेषां तु पितरं देवं त्र्यम्बकं(घ) स्तौत्यृगुत्तमा ॥३॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्य(ङ)दिति सप्तभिः ।
अश्विनौ तु स्तुतौ(५) देवावष्टभिः प्रति वा(च)मिति ॥४॥
यद्(छ)द्योत्सूर्य(ज) इति तिस्र उ(झ)देतीत्यर्द्धपञ्चमाः ।
सौर्यं तच्चक्षु(ञ)(६)रिति तु गीयते चक्षुर्देवता ॥५॥

---

(१) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितम् ।
(२) त्विति क० ग० घ० च० ।
(३) त्वष्टौ प्रस्वापनौ स्मृता इति क० ग० घ० च० ।
(४) ततः इति ख० ङ० पुस्तकान्तरयोः ।
(५) परैरिति क० ग० घ० च० ।
(६) तदस्तु सर्वचक्षुरिति ख० ङ० पुस्तकान्तरयोः ।

---

(क) ऋ० ७, ५०, १ । (ख) ऋ० ७, ५३, १ । (ग) ऋ० ७, ५६, १ ।
(घ) ऋ० ७, ५९, १२ । (ङ) ऋ० ७, ६०, १ । (च) ऋ० ७, ६५, १ ।
(छ) ऋ० ७, ६०, १ । (ज) ऋ० ७, ६२, १ । (झ) ऋ० ७, ६३, १ ।
(ञ) ७, ६६, १६ ।

आदित्यानां तद्वो[क] अद्य द्वे ऋचौ शौनकोऽब्रवीत् ।
अन्याः सर्व्वा ऋचः सौर्य्या यदद्याद्याः[ख]प्रकीर्त्तिताः ॥६॥
इमे चेतार[ग] इत्याद्याः[१] सत्रे मित्रो मितः स्तुतः ।
अर्य्यम्णो वरुणस्यापि मित्रस्यैता नव स्तुताः ॥७॥
यदद्य सूरे[घ] इत्याद्या दशादित्या ऋचः स्तुताः ।
सविता वा[२]दितिर्मित्रो वरुणश्चार्य्यमा भगः ॥८॥
स्तुता उदु त्य[ङ]दित्येतास्तिस्रः सौर्य्यस्ततः पराः ।
आशीस्तच्चक्षु[च]रित्येतामाचार्य्यः शौनकोऽब्रवीत्[३] ॥९॥
उषास्तु सप्तभिर्व्युषाः[छ] सूक्तान्येभ्यः पराणि तु ।
चत्वारीन्द्रावारुणानि[४] इन्द्रावरुणयोः स्तुतिः ॥१०॥
उदु ज्योति[ज]रिति त्वस्मिन्नर्द्धर्चे मध्यमः स्तुतः[५] ।
वरुणस्य गृहान्रात्रौ वसिष्ठः स्वप्न[६] आचरत् ॥११॥
प्रविवेशाथ तं तत्र श्वा नदन्नभ्यवर्त्तत[७] ।

(१) इत्याद्यैरिति पाठः सङ्गतार्थः ।
(२) वेति ख० ङ० ।
(३) आदित्यानां तद्वो अद्येत्यादयश्चत्वारः श्लोकाः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यन्ते ।
(४) इन्द्रावरुणेतीति क० ग० घ० च० ।
(५) एतच्छ्लोकार्द्धं क० ग० घ० चिह्नितपुस्तकेषु नापश्यत ।
(६) चौर्य्यमिति ख० ।
(७) अभ्यधावतेति क० ग० घ० च० ।

(क) ऋ० ७, ६६, १२ । (ख) ऋ० ७, ६६, ४ । (ग) ऋ० ७, ६०, ५ ।
(घ) ऋ० ७, ६६, ४ । (ङ) ऋ० ७, ६६, १४ । (च) ऋ० ७, ६६, १६ ।
(छ) ऋ० ७, ७५, १ । (ज) ऋ० ७, ७६, १ ।

क्रन्दन्तं सारमेयं स धावन्तं द्रष्टुमुद्यतं ॥१२॥
यदर्जुने(क)ति च त्रिभिः सान्त्वयित्वा व्यसुष्वपत्(१)।
स तं(२) प्रस्वापयामास जनमन्यञ्च वारुणम् ॥१३॥
ततस्तु वरुणो राजा स्वान् पाशान् प्रत्यमुञ्चत(३)।
स बद्धः(४) पितरं सूक्तैस्तत्रिभिरिति उत्तरैः(५) ॥१४॥
अभितुष्टाव धीरे(ख)ति सुमोचैनन्ततः पिता।
ध्रुवासु त्वे(ग)ति चोक्तायां पाशा अस्मात्ममोचिरे(६) ॥१५॥
पराणि त्रीणि सूक्तानि वायव्यानि प्रवीरया(घ)।
अत्र तास्त्वे(७)न्द्रवायव्याः स्तुचो(८) यासु(९) दिवत्स्तुतिः ॥१६॥
प्रवीरयोक्ता वायव्याः प्रा उ(१०) गीत्यैतरेयके।

---

(१) क्रन्दन्तमित्यादि सान्त्वयित्वा व्यसुष्वपदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(२) एवमिति ख० ङ० पुस्तकान्तरञ्च।
(३) स्वैः पाशैः प्रत्यबध्यत इति क० ग० घ० च०।
(४) बुद्धेति क० घ० च।
(५) बद्धः स वारुणैः पाशैः ध्रुवा सुत्वेति दृश्यते इति ख० ङ० पुस्तकान्तरञ्च।
(६) मुमुचिरे इति पाठः शुद्धः।
(७) चेति ख० ङ० पुस्तकान्तरञ्च।
(८) स्तुताविति क० ग० घ० च०।
(९) यास्विति ख० ङ० पुस्तकान्तरञ्च।
(१०) प्राश्विति ख०।

---

(क) ऋ० ७, ५५, २। (ख) ७, ८६, १। (ग) ऋ० ७, ८८, ७।
(घ) ऋ० ७, ९०, १।

पदस्य व्यत्ययं कृत्वा वायोः प्राधान्यमुच्यते ॥१७॥
ते सत्येन ऋचो यावन्तस्त्वतुर्ऋचः पुनः।
उपमन्तिका(क) प्रयोता(ख) चर्गद्वयोरेता नव स्मृताः(१) ॥१८॥
ऐन्द्राग्ने शुचि(ग)मित्येते प्रेति(घ) सारस्वते परे।
स्तुतस्यैव सरस्वांस्तु(२) जनियन्त(ङ)स्त्वतुर्ऋचिः(३) ॥१९॥
राजा वर्षसहस्राणि(४) दीर्घियज्वाऽऽप्यः पुरा।
चचारैकरथेनेमां भुवन् सर्व्वाः समुद्रगाः ॥२०॥
यच्छ वहत भागान् मे(५) द्वन्द्वशो वाय्वनेकशः(६)।
प्रत्यूचुस्तं नृपं नद्यश्चाल्पवीर्याः कथं वयं ॥२१॥
वहेम भोगान् सर्वांस्ते सन्ने वार्षसहस्रिके(७)।

---

(१) प्रवीरयोत्तर वायव्या इत्यादि द्वयोरेता नव स्मृता इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नालोक्यते।

(२) देवा सरस्वान् स इतीति छ॰ पुस्तकान्तरे च। देवा इत्यत्र दूषे इति ख॰।

(३) चतस्रभिरिति क॰ घ॰ च॰ षतिसृभिरिति ग॰।

(४) वर्षसहस्रायेति ख॰ ग॰ ङ॰ पुस्तकान्तरे च।

(५) भोगान् मे इति पाठो युक्तः उत्तरत्र तथादर्शनात्। ऽपवहत मां सर्व्वामिति क॰ घ॰ च॰, वहध भागान् मे इति ग॰, वहत माः सर्व्वाः इति ङ॰।

(६) वाय वैकश इति क॰ ख॰ ग॰ घ॰ च॰।

(७) वर्षसहस्रके इति ख॰ ङ॰।

---

(क) ऋ॰ ७, ६१, २। (ख) ऋ॰ ७, ६२, २। (ग) ऋ॰ ७, ६३, १।
(घ) ऋ॰ ७, ६५, १। (ङ) ऋ॰ ७, ६६, ४।

सरस्वतीं प्रपद्यस्व सा त्वा[१] वच्यति नाहुष ॥२२॥
तथेत्युक्त्वा जगामाशु आपगां[२] स सरस्वतीम्।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम्[३] ॥२३॥
एतदत्यद्भुतं कर्म सरस्वत्या नृपं प्रति।
वारुणिः[४] कीर्त्तयामास प्रथमस्य द्वितीयया ॥२४॥
द्वे बार्हस्पत्ये ऐन्द्रे च[५] वैष्णवे तु[६] परे ततः।
उत्तमैन्द्र्यत्र तिस्रः[क] स्तुः[७] पर्जन्ये तिस्र उत्तरे ॥२५॥
आग्नीर्च्चक् प्रथमा तत्र प्रथमस्य तृतीयया।
यज्ञे आधेन्द्रमेवासीदन्या त्विन्द्राबृहस्पती[८] ॥२६॥
तृतीया नवमी चैव स्तौतीन्द्राब्रह्मणस्पती[९]।

---

(१) ते इति ख० ङ० पुस्तकान्तरञ्च।
(२) जगामाय पावनीमिति ख० ङ० पुस्तकान्तरञ्च।
(३) प्रतिजग्राह सा चैनं पयः सर्पिश्च दुह्यतीति क० ग० घ० च०।
(४) वारुणः इति ख०।
(५) ऐन्द्रे यज्ञे दिवः सूक्ते इति क० घ० च०, यज्ञे बार्हस्पत्यमैन्द्रमिति ग०।
(६) चेति ख० ङ० पुस्तकान्तरञ्च।
(७) तृचो द्वितीयोऽस्मैन्द्रेति क० घ० च०।
(८) आग्नीर्च्चक् प्रथमा तत्रेत्यादि अन्या त्विन्द्रा बृहस्पती इत्यन्तपाठः क० ग० ध० च० चिह्नितपुस्तकेषु नोपलभ्यते। तेषु अस्मिन् स्थले. स्तौतीन्द्रं प्रथमा तत्र द्वितीयाद्या बृहस्पतिं। इति श्लोकार्द्धं वर्त्तते।
(९) सहेन्द्राब्रह्मणस्पती इति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ७, १०१, १।

संवत्सर[क]न्तु माण्डूकमैन्द्रासोमं[१] परन्तु यत् ॥२७॥
ऋषिर्ददर्श रक्षोघ्नं[२] पुत्त्रशोकपरिप्लुतः ।
हते पुत्त्रशते क्रुद्धः सौदासैर्दुःखितस्तदा[३] ॥२८॥
ये पाकशंस[ख]मृक् सौम्या[४] आग्नेयी तत उत्तरा ।
एकादशी वैश्वदेवी सौम्यस्तस्याः परो तृचः[५] ॥२९॥
यदि वाह[ग]मृगाग्नेयी ऐन्द्री यो मे[घ]ति तु स्तुता[६] ।
वारुणी प्रयाजिगाती[ङ]ति वितिष्ठध्वं[च] तु मारुती ॥३०॥
प्रवर्त्तये[छ]ति पञ्चैन्द्र्य ऐन्द्रासोमीत्यृगुत्तमा ।
ऋषिस्त्वाशिषमाशास्ते मानो रक्ष[ज] इति तृचि[७] ॥३१॥
दिवश्चैव पृथिव्याश्च तथा पालनमात्मनः ।
उलूक यातुं[झ][८] जह्येतान्नानारूपान्निशाचरान्[९] ॥३२॥

---

(१) मण्डूका इन्द्रासोममिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) राक्षोघ्नमिति क॰ घ॰ ङ॰ च॰ ।
(३) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।
(४) सौम्याविति ङ॰ ।
(५) तृचः इति ग॰ ।
(६) यो मेतीन्द्रः स्तुतोऽर्द्धयेति ङ॰ पुस्तकान्तरञ्च ।
(७) तृचे इति क॰ घ॰ च॰ ।
(८) यात्विति क॰ ख॰ ग॰ घ॰ च॰, यान्त्विति पुस्तकान्तरम् ।
(९) एष श्लोकः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ॰ ७, १०३, १ । (ख) ऋ॰ ७, १०४, ९ । (ग) ऋ॰ ७, १०४, १४ । (घ) ऋ॰ ७, १०४, १६ । (ङ) ऋ॰ ७, १०४, १७ । (च) ऋ॰ ७, १०४, १८ । (छ) ऋ॰ ७, १०४, १९ । (ज) ऋ॰ ७, १०४, २३ । (झ) ऋ॰ ७, १०४, २२ ।

पञ्चदश्यान्तु सूक्तस्याद्यष्टभ्यां[1] चैवं वारुणिः।
दुःखशोकपरीतात्मा शपते विलपन्निव ॥२३॥
हते पुत्रशते तस्मिन्[2] वसिष्ठो दुःखितस्तदा।
रक्षोभूतेन शापात्तु सुदासेनेति नः श्रुतं[3] ॥२४॥
कण्वश्चैव प्रगाथश्च घोरपुत्रौ बभूवतुः।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरःस्वपन्[4]।
कृत्वा कनीयान् कण्वस्योरुत्सङ्गावन्वबुध्यत[5] ॥२६॥
शशुकामस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स घोरो[6] वाथ कण्वो वा वंशजैर्बहुभिः पितुः।
ददर्शान्यैश्च सहितः ऋषिर्मण्डलमष्टमम् ॥२९॥

---

(१) अष्टम्यामिति क॰ ग॰ घ॰ च॰।
(२) क्रुद्धः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) वै श्रुतिरिति क॰ ग॰ घ॰ च॰।
(४) शिरःश्रमादिति क॰ घ॰ च॰। शिरःस्वपदिति ख॰ ग॰।
(५) उत्सङ्गेनावबुध्यतेति क॰ घ॰ च॰। कण्वस्योरुत्सङ्गेन त्वबुध्यतेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) घोरः इति क॰ ख॰ घ॰ च॰।

माचिदे[क]न्द्राणि चत्वारिं अन्वस्य स्थूर[ख]मित्यृचि।
तुष्टावाङ्गिरसी नारी वसन्तौ[१] अश्वतौ[ग] पतिम् ॥४०॥
स्वियं मन्तं[२] पुमांसन्तमासङ्गः स्तुतवानृषिः[३]।
स्वस्य[४] दानं स्तुद्धी[घ]त्यृग्भिश्चतुर्भिः परिकीर्त्तितम् ॥४१॥
त्रिचे[ङ]त्यृग्भ्यां तु काव्यस्य विभिन्दोः परिकीर्त्तितम्।
पाकस्थाम्नस्तु[५] भोजस्य चतुर्भिर्यमिति[च] स्तुतम् ॥४२॥
पौष्णौ प्रेति[छ] प्रगाथौ द्वौ[६] मन्यते शाकटायनः।
ऐन्द्रमेवाथ पूर्वन्तु गालवः पौष्णमुत्तरम्[७] ॥४३॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे त्वचे।
दानं राज्ञः कुरुङ्गस्य स्थूरं राध[ज] इति स्तुतं ॥४४॥
दूरा[झ]दित्याश्विने सूक्ते सप्तचिश्चन्तामे[ञ] यथा।

---

(१) वसन्ताविति ख०। वसताविति ङ०।
(२) त्वन्तमिति ग०।
(३) मासं तं स्तुतवानृषिरिति ङ० पुस्तकान्तरञ्च।
(४) तस्येति ख० ङ० पुस्तकान्तरञ्च।
(५) चेति ख० ङ०।
(६) त्विति ख० ङ० पुस्तकान्तरञ्च।
(७) उत्तममिति ङ०।

---

(क) ऋ० ८, १, १। (ख०) ऋ० ८, १, ३४। (ग) ऋ० ८, १, ३४।
(घ) ऋ० ८, १, ३०। (ङ) ऋ० ८, २, ४१। (च) ऋ० ८, ३, २१।
(छ) ऋ० ८, ४, १५। (ज) ऋ० ८, ४, १९। (झ) ऋ० ८, ५, १।
(ञ) ऋ० ८, ५, ३७।

पञ्चदश्यान्तु सूक्तस्याथाष्टम्यां[1] चैवं वारुणिः।
दुःखशोकपरीतात्मा शपते विलपन्निव ॥२३॥
हते पुत्रशते तस्मिन्[2] वसिष्ठो दुःखितस्तदा।
रक्षोभूतेन शापात्तु सुदासेनेति नः श्रुतं[3] ॥२४॥
कण्वस्यैव प्रगाथस्य घोरपुत्रौ बभूवतुः।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरःस्वपन्[4]।
छत्वा कनीयान् कण्वस्योरुत्सङ्गावन्वबुध्यत[5] ॥२६॥
शङ्कमानस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स घौरो[6] वाथ काण्वो वा वंशजैर्बहुभिः पितुः।
ददर्शान्यैश्च सहितः ऋषिर्मण्डलमष्टमम् ॥२९॥

---

(१) षष्ठ्यामिति क० ग० घ० च०।
(२) क्रुद्धः इति ख० ङ० पुस्तकान्तरञ्च।
(३) वै श्रुतिरिति क० ग० घ० च०।
(४) शिरःश्रमादिति क० घ० च०। शिरःस्वपदिति ख० ग०।
(५) उत्सङ्गेनावबुध्यतेति क० घ० च०। कण्वस्योरुत्सङ्गेन स्वबुध्यतेति ख० ङ० पुस्तकान्तरञ्च।
(६) घोरः इति क० ख० घ० च०।

माचिदि[क]न्द्राणि चत्वारि स्कन्दस्य सूर[ख]मित्यृचि ।
तुष्टावाङ्गिरसी नारी वसन्तौ[1] प्रश्वतौ[2] पतिम् ॥४०॥
स्त्रियं मन्तं[ग] पुमांसन्तमासङ्गः स्तवानृषिः[3] ।
स्वस्य[4] दानं स्तुती[घ]त्यृग्भिश्चतुर्भिः परिकीर्त्तितम् ॥४१॥
मित्रे[ङ]त्यृग्भ्यां तु काण्वस्य विभिन्दोः परिकीर्त्तितम् ।
पाकस्थाम्नस्तु[5] भोजस्य चतुर्भिर्यमिति[च] स्तुतम् ॥४२॥
पौष्णौ प्रेति[छ] प्रगाथौ द्वौ[6] मन्यते शाकटायनः ।
ऐन्द्रमेवाद्य पूर्वन्तु गालवः पौष्णमुत्तरम्[7] ॥४३॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे दृचे ।
दानं राज्ञः कुरुङ्गस्य स्थूरं राध[ज] इति स्तुतं ॥४४॥
दूरा[झ]दित्याश्विने सूक्ते सप्तचिंशत्तमे[ञ] यथा ।

(१) वसन्ताविति प॰ । वसतावेति ङ॰ ।
(२) ध्वन्तमिति म॰ ।
(३) मासं तं स्तवानृषिरिति ङ॰ पुस्तकान्तरेषु ।
(४) तस्येति प॰ ङ॰ पुस्तकान्तरेषु ।
(५) चेति ख॰ ङ॰ ।
(६) त्रिति प॰ ङ॰ पुस्तकान्तरेषु ।
(७) उत्तममिति प॰ ।

(क) ऋ॰ ८, १, १। (ख॰) ऋ॰ ८, १, २४। (ग) ऋ॰ ८, १, ३४।
(घ) ऋ॰ ८, १, ३०। (ङ) ऋ॰ ८, २, ४१। (च) ऋ॰ ८, ३, २१।
(छ) ऋ॰ ८, ४, १५। (ज) ऋ॰ ८, ४, १९। (झ) ऋ॰ ८, ५, १।
(ञ) ऋ॰ ८, ५, ३०।

तत्रार्द्धर्चौ[१] द्वृच[२]स्त्वान्यः कण्वोर्द्धनस्तवः स्तुतः ॥४५॥
महानितौ[क]न्द्रदैवत्यमग्निं वैश्वानरं स्तुतम्[३] ।
मन्यते शाकपूणिस्तु भार्म्याश्व[४]श्चैव मुद्गलः ॥४६॥
दवे तु शत[ख]मित्यस्मिन् दानं तैरिन्दिरं स्तुतम् ।
परन्तु मारुतं प्रेति[ग] श्वान[घ]स्त्रीण्या[ङ]श्विनानि च[५] ॥४७॥
त्व[च]माग्नेयं य इन्द्रे[छ]ति षडैन्द्राण्युत्तमस्य तु ।
उपोत्तमायामर्द्धर्चे देवो वास्तोस्पतिः[ज] स्तुतः ॥४८॥
इद[झ]मादित्यदैवत्यं तिसृभिस्त्वदितिः[ञ] स्तुता[६] ।
षष्ठ्यां चतुर्थीसप्तम्योरुते[ट]त्याश्विन्युगष्टमी[७] ॥४९॥
स्तुताः अ[ठ]मिति पञ्चोत्था[८]मग्निसूर्यानिलास्त्रयः ।

---

(१) इत्यर्द्धर्चः इति ख० ङ० पुस्तकान्तरञ्च ।
(२) द्वृचः इति क० ग० ङ० च० ।
(३) महानैन्द्रं प्रत्नवत्यामग्निवैश्वानरः स्तुतः इति क० ग० घ० च० ।
(४) भार्म्यश्वः इति ङ० ।
(५) स्ततः इति ख० ङ० पुस्तकान्तरञ्च ।
(६) तथेति क० ङ० पुस्तकान्तरञ्च ।
(७) यथा चतुर्थी सप्तम्योतेत्याश्विन्युगष्टमीति क० घ० च० ।
(८) पञ्चस्त्विति क० ग० घ० च० ।

---

(क) ऋ० ८, ६, १ । (ख) ऋ० ८, ६, ४६ । (ग) ऋ० ८, ७, १ ।
(घ) ऋ० ८, ८, १ । (ङ) ऋ० ८, ८, २३ । (च) ऋ० ८, ११, १ ।
(छ) ऋ० ८, १२, १ । (ज) ऋ० ८, १७, १४ । (झ) ऋ० ८, १८, १ ।
(ञ) ऋ० ८, १८, ६ । (ट) ऋ० ८, १८, ८ । (ठ) ऋ० ८, १८, ९ ।

वरुणार्य्यममित्राणां प्रगाथोऽय(१)मिति स्तुतिः(२) ॥५०॥
आग्नेये स्तुती राजर्षेस्त्रसदस्योरदा(क)दिति ।
पञ्चाशतं वधूनाञ्च गवां तिस्रश्च सप्ततीः ॥५१॥
अश्वोष्ट्राणामुरभ्राणां वासांसि विविधानि च ।
रत्नानि वृषभं ग्रावं तासामपीश्वरं पतिम्(३) ॥५२॥
हृत्वा दारानृषिर्गच्छन्निन्द्रायैतच्छशंस च ।
वयं(ख) सूक्तेन शक्रस्य प्रीतस्तेन शचीपतिः ॥५३॥
आपे वरं वृणीष्वेति शक्रस्तमृषिरब्रवीत् ।
काकुत्स्थ कन्याः पञ्चाशद्युगपद्रमये प्रभो ॥५४॥
कामतो बहुरूपत्वे यौवने(४) चाक्षयो रतिं ।
शङ्खनिधिं पद्मनिधिं मद्गेहेष्वनपायिनम्(५) ॥५५॥
प्रासादान् विश्वकर्मासौ सौवर्णांस्त्वप्रमादतः ।
करोतु पुष्पवाटीश्च पृथक्कामा सुरद्रुमैः ॥५६॥
मा भूत् सपत्नी स्पर्द्धायां सर्व्वमस्त्विति चाब्रवीत्(६) ।

(१) वरुणार्य्यममित्राणां प्रगाथेयमिति ख• घ• ।
(२) स्तुताः इति ख• घ• पुस्तकान्तरञ्च, तदेति ग• ।
(३) अमे वरं वृणीति ख• ।
(४) युगपदिति घ• ।
(५) काकुत्स्थेत्यादिसार्द्धश्लोकः पुस्तकान्तरे न दृश्यते ।
(६) पञ्चाशतं वधूनाञ्चेत्यादि सर्व्वमस्त्विति चाब्रवीदित्यन्तपाठः क• ग• घ• च• चिह्नितपुस्तकेषु नेष्यते ।

(क) ऋ• ८, १९, १६ । (ख) ऋ• ८, २१, १ ।

आगन्त[क] मारुतं सूक्तं वय[ख]मित्यैन्द्रमुत्तरम्[1] ॥५७॥
काण्वस्य सौभरे[2]श्चैव यजतो वंशजैः[3] सह।
कुरुक्षेत्रे यवान् जघुर्देवोपि विविधानि च ॥५८॥
आखुश्च[4] सोऽभितुष्टाव इन्द्रञ्चैव सरस्वतीं।
इन्द्रो वे[ग]त्यनयर्चा स दानशक्तिं प्रकाशयन् ॥५९॥
आखुराजोऽभिमानाच्च प्रहर्षितमनाः स्वयम्[5]।
स स्तुतो[6] देववच्चैव[घ] ऋषये तु गवां ददौ[7] ॥६०॥
अयुतानां सहस्रं वै निर्जयाद्य स्तुवन्नृपिः।
ऋषिश्चोवाच[8] हृष्टात्मा नाहमर्हाम्यृषेः स्तुतिम् ॥६१॥
तिर्यग्योनौ समुत्पन्नो[9] देवतां[10] स्तोतुमर्हसि।

---

(१) वयमैन्द्रमतः परमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) सौभरेरिति क॰ ग॰ घ॰ च॰।
(३) वङ्गजैरिति क॰ घ॰ च॰।
(४) आखवः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) इन्द्रोवेत्यनयर्चा स इति श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नायोक्यते।
(६) संस्तुत इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(७) यद्ददौ तद्दृचेन चेति ङ॰ पुस्तकान्तरञ्च।
(८) प्रोवाचेति ङ॰।
(९) समुद्भूत इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) देवं नः इति ग॰।

---

(क) ऋ॰ ८, २०, १। (ख) ऋ॰ ८, २१, ४। (ग) ऋ॰ ८, २१, १७। (घ) ऋ॰ ८, २१, १८।

तमन्वया पुनस्त्वासीदोत्यं(क) सूक्तेन चाश्विनौ(१) ॥६२॥
इति(ख)त्वेत्येतदाग्नेयं सखायश्चैन्द्रमुत्तरम्(२) ।
यथा वरः सुषाम्णे (ग)उत्तमस्त्वौषसस्तृचः ॥६३॥
अष्टौ तु सहिता एता देवता विभिदुर्बलम् ।
उपायेन्द्रश्च सोमश्चाथाग्निः सूर्यो बृहस्पतिः ॥६४॥
अङ्गिराः सरमा चैव ता वा(घ)मित्युत्तरस्य तु ।
आद्यौ मैत्रावरुण्यस्तु(३) नव द्वादश तूत्तराः ॥६५॥
वैश्वदेव्यो वद्धराजा यथादादृषये वसु ।
इन्द्रो वेत्येनयर्चा तु दानप्रश्निप्रकाशनम्(४) ॥६६॥
कीर्त्तितं(५) तु तृचे तस्मिन्नृच(ङ)मुचथ्यायने ।
अश्विनौ ददतुः प्रीतौ तदिहोक्तं सुषामनि(६)(च) ॥६७॥

---

(१) स्तुत्वा चित्रं सूक्तैः परैस्त्रिभिरिति क॰ घ॰ च॰ ।
(२) उत्तममिति ख॰ एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम् । तेषु अस्मिन् स्थले, अश्विनावग्निमिन्द्रञ्च चाभितुष्टाव देवताः। एतच्छ्लोकार्द्धं वर्त्तते ।
(३) मित्रावरुण्य इति ख॰ ग॰ ।
(४) एतच्छ्लोकार्द्धं ख॰ ग॰ग॰ चिह्नितपुस्तकेषु नापश्यत ।
(५) कीर्त्तनमिति ङ॰ पुस्तकान्तरस्य ।
(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ॰ ८, २२, १ । (ख) ऋ॰ ८, २३, १ । (ग) ऋ॰ ८, २४, २८ । (घ) ऋ॰ ८, २५, १ । (ङ) ८, २४, २२ । (च) ऋ॰ ८, २५, २२ ।

आश्विनं तु युवो[क]र्युत्त्व[ख] वायव्या उत्तरास्तु याः ।
यं सवर्णमनुर्नाम लेभे पुत्रं विवस्वतः ॥६८॥
वैश्वदेवानि पञ्चैतान्यग्निरुक्ये[ग] जगाद सः[१] ।
बभुरेक[घ] इति त्वस्मिंस्त्रिङ्गतो[२] द्विपदा दश ॥६९॥
स्तूयन्ते देवता ह्यासु कर्मभिः[३] स्वैः पृथक् पृथक् ।
स्तुताः कर्मगुणैः स्वैः स्वैर्देवता यत्र यत्र तु ॥७०॥
पृथक् कर्मस्तुतिर्नाम वैश्वदेवन्तदेव तु[४] ।
तासाम्बभुरिति त्वाद्या सौम्याग्नेयौ त्वृगुत्तरा ॥७१॥
त्वाष्ट्री चैन्द्री च रौद्री च पौष्णी वैष्णव्यृगाश्विनी ।
नवमी मैत्रावरुण्यृग्दशमी मित्रसंस्तवा ॥७२॥
यजमानप्रमङ्गाच्च यजिरेवाच संस्तुता ।
यो यजाति[ङ]रृचे प्रक्तो यजतां पतिरीरितः ॥७३॥
तस्य द्युमान्[च] दृचे यस्त्वा चतसृष्वपि सत्त्वि[छ]ति ।

---

(१) वैश्वदेवानि सूक्तानि जगादाग्निरिति स्वयमिति क॰ घ॰ च॰ ।
(२) त्वेता त्रिङ्गतः इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(३) ह्यासा नवभिरिति क॰ ग॰ च॰ ।
(४) पृथक् कर्मस्तुतेरुक्तं तद्विद्यादैश्वदेवतमिति ख॰ ङ॰ पुस्तकान्तरेषु ।

---

(क) ऋ॰ ८, २६, १ । (ख) ऋ॰ ८, २६, २० । (ग) ऋ॰ ८, २७, १ । (घ) ऋ॰ ८, २८, १ । (ङ) ऋ॰ ८, ३१, १ । (च) ऋ॰ ८, ३१, ५ । (छ) ऋ॰ ८, ३१, १५ ।

यज्वनोरेव दम्पत्योः पञ्च या(क) दम्पतीत्यृचः ॥७४॥
आ शर्म(ख) गौरैतु(ग) पौष्णौ परे मित्रार्यमा यथा(घ) ।
वरुणस्य सुतस्त्वच आदित्या अग्नि(ङ)मग्नये(१) ॥७५॥
सूक्तानि महतानी(च)ति चैन्द्राणि पराण्यतः ।
अध(छ) इत्यत्र कन्या तं स्त्रीलिङ्गेनेन्द्रमब्रवीत् ॥७६॥
स हि तां कामयामास दानवीं पाकशासनः ।
ज्येष्ठां स्वसारं पुंसश्च(२) तस्यैव वधकाम्यया(३) ॥७७॥
अग्निने(ज)त्याश्विनं सूक्तमैन्द्रे सूक्ते परे ततः ।
ऐन्द्राग्न्यात् परमाग्नेयमैन्द्राग्न्यादारुणे(४) परे ॥७८॥
उत्तरे वरुणे लन्य आ वा(झ)मित्याश्विनस्तृचः ।
सूक्ते इमे(ञ) समाग्नेये(५) ताभ्यामैन्द्रे ततः परे(६) ॥७९॥

(१) यो यज्वाति वृचे ग्रक इत्यादिसार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नित-पुस्तकेषु नापश्यत ।

(२) प्युषस्येति क० घ० च०, कंसस्येति ख० पुस्तकान्तरञ्च।

(३) युवकाम्ययेति ख० ग० ङ० पुस्तकान्तरञ्च ।

(४) ऐन्द्राग्नं परमाग्नेयमैन्द्राग्नं वारुणे इति क० घ० च० । वारुणे इत्यत्र वारुणमिति ग० ।

(५) इमे तु चाग्नेये इति क० घ० च० ।

(६) ताभ्य मैन्द्रेति चोत्तरे इति क० ग० घ० च० ।

(क) ऋ० ८, ३१, ५ । (ख) ऋ० ८, ३१, १० । (ग) ऋ० ८, ३१, ११ । (घ) ऋ० ८, ३१, १३ । (ङ) ऋ० ८, ३१, १४ । (च) ऋ० ८, ३२, १ । (छ) ऋ० ८, ३३, १९ । (ज) ऋ० ८, ३५, १ । (झ) ऋ० ८, ४२, ४ । (ञ) ऋ० ८, ४२, १ ।

बभ्रायाख्याय(१)यत्(२)प्रादात्कानीनस्तु पृथुश्रवाः ।
तदृच संस्तुतं दानमास(क) इत्येवमादिभिः(३) ॥८०॥
प्रातः(ख) प्रगाथो वायव्यः सूक्तस्योपोत्तमा च या ।
मित्रार्य्यमाणौ मरुतः सुगीयो(ग)द्वृचे स्तुताः ॥८१॥
द्विचत्वारिंशकात्प्रीत(४) स्त्रिशोकाय पुरन्दरः ।
गिरिं निहत्य वज्रेण गा ददावसुरैर्हृताः ॥८२॥
यः(घ) इन्द्रादिति चैतस्यामृषिस्तु स्वयमब्रवीत्(५) ।
स्तुता नवम्या त्वदितिर्महो(ङ)त्यादित्यदेवते(६) ॥८३॥
अन्याः पञ्चोपसेऽपि स्युः सौम्यं स्वादो(च)रिति स्तुतम् ।
पराण्यष्टौ तु(७) सूक्तानि ऋषीणां तिग्मतेजसाम् ॥८४॥

---

(१) बभ्रायाख्यायेति घ० ।
(२) बभ्राम्बाय वपदिति ङ० ।
(३) ह्यादिनेति ख० ङ० पुस्तकान्तरे च ।
(४) प्रातः इति ङ० पुस्तकान्तरे च ।
(५) मित्रार्य्यमाणौ मरुत इत्यादि ऋषिस्तु स्वयमब्रवीदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(६) चापीति क० घ० च० ।
(७) पराणि चाष्टाविति ख० ङ० पुस्तकान्तरे च ।

---

(क) ऋ० ८, ४६, २१ । (ख) ऋ० ८, ४६, २५ । (ग) ऋ० ८, ४६, ४ । (घ) ऋ० ८, ४६, २७ । (ङ) ऋ० ८, ४७, १ । (च) ऋ० ८, ४८, १ ।

ऐन्द्राग्न्यभि[क] तु षड्विंशः प्रगाथो बहुदेवतः।
अग्नन्त्याग्नेरचेत्य[ख]ग्निः सूर्य्यमन्त्यपदा[१] जगौ[२] ॥८५॥
प्रस्कण्वश्च पृषध्रय[३] प्रादाद्यदस्य किञ्चन।
तद्दूरी[ग]दिति सूक्ताभ्यामखिलन्त्विह संस्तुतम्[४] ॥८६॥
ऐन्द्राण्युभय[घ]मित्यच षडाग्नेयात् पराणि तु[५]।
निपातभाक्[६] देवानां दाता स[ङ] इति भागुरिः ॥८७॥
तृचे[७]यास्कस्तृचन्त्वेतं[८] मन्यते वैश्वदेवतं।
आदित्यदैवतं सूक्तं त्यान्नि[च]त्यच परन्तु यत् ॥८८॥
धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले।

---

(१) अन्त्यं पदमिति ङ० पुस्तकान्तरञ्च।
(२) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते। तेषु अस्मिन् स्थले, अन्वेत्यमिरिति तस्यास्ततोऽग्निः सूर्य्यं एव तु। इति श्लोकार्द्धमस्ति।
(३) त्विति ङ०।
(४) परिकीर्त्तितमिति ख० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(६) निपातनाद्वेति ख०, निपातेनेत्येति ङ० पुस्तकान्तरञ्च।
(७) ऋचमिति ग०।
(८) यास्कोऽस्केऽर्द्धं तृचं चैनमिति ङ०।

---

(क) ऋ० ८, ४९, १। (ख) ऋ० ८, ५६, ५। (ग) ऋ० ८, ५५, १। (घ) ऋ० ८, ६१, १। (ङ) ऋ० ८, ६५, १०। (च) ऋ० ८, ६७, १।

जालं प्रक्षिप्य तान् बद्धोदक्षिपन् सलिलात् स्थलम् ॥८९॥
शरीरपातभीतास्ते तुष्टुवुश्चादितेः सुतान् ।
मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥९०॥
धीवराः क्षुद्भयं मा वो भूत्स्वर्गं प्राप्स्यथेति च(१) ।
उते(क)ति माता चैवैषां त्र्यृचेनाभिष्टुतादितिः ॥९१॥
मातृत्वाद्गर्भसम्बन्धात्(२) स्तूयेतैषां(३) स्तुतौ स्तुतौ ।
ऐन्द्राण्या त्वा रथं(ख) त्रीणि स्तौत्यूर्ध्वमुपसे(ग)ति षट् ॥९२॥
आर्क्षाश्वमेधयोश्च पञ्चदानस्तुतिः परा ।
अपा(घ)दिन्द्रस्य चाग्नेश्च विश्वेषां चैव संस्तवः ॥९३॥
तृचस्य प्रथमोऽर्द्धर्चः शेषा वरुणदेवताः(४) ।
त्व(ङ)माग्नेयेऽथ वा सूक्ते उत्तरे(५) हविषां स्तुतिः॥९४॥
पयःपश्वोषधीनाञ्च(६) तथा रूपं हि दृश्यते ।

---

(१) धीवराः स्वस्था मोमानित्यादि सार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नितपुस्तकेषु नास्त्येव ।

(२) मातृत्वादतिसम्बन्धादिति क० च०, मातृत्वादभिसम्बन्धादिति ग० मातृत्वादिति सम्बन्धादिति घ० ।

(३) स्तुवन्त्येनामिति ख० ङ० पुस्तकान्तरेषु ।

(४) शेषो वरुणदैवत इति ख० ग० ङ० ।

(५) ह्याहमुत्तरमिति क० ग० घ० च० ।

(६) चेति ख० ङ० ।

---

(क) ऋ० ८, ६७, १० । (ख) ऋ० ८, ६८, १ । (ग) ऋ० ८, ६८, १४ । (घ) ऋ० ८, ६९, १२ । (ङ) ऋ० ८, ७१, १ ।

उ(क)दित्याश्विनमाग्नेये परे सूक्ते विशो विशः(ख) ॥८५॥
ऋग्भ्यामह(ग)मिति द्वाभ्यां स्तौत्यात्मानमृषिः स्वयम् ।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्वणः ॥८६॥
आत्मादानाभिसम्बन्धात् परुष्णीञ्च महानदीम्(१) ।
परुष्णीं परया चेन्द्रं(२) त्रिभिः सूक्तैरिम(घ)न्विति ॥८७॥
सौम्यस्य लय(ङ)मित्यस्य पराण्यैन्द्राणि यानि तु ।
नद्यो(च)ति तेषां प्रथमे(३) वैश्वदेव्यृगवीवृधत्(छ) ॥८८॥
देवाना(ज)मिति देवानाम्मेष्ठ(झ)माग्नेयमुत्तरम्(४) ।
चौष्णाश्विनानि सूक्तानि आ मे(ञ)ऐन्द्राणि तं(ट) तथा(५) ॥८९॥
अपालाऽत्रिसुता त्वासीत्कन्या त्वग्दोषिणी पुरा ।
तामिन्द्रश्चकमे दृष्ट्वा(६) विजने पितुराश्रमे ॥१००॥

---

(१) आत्मानमात्मना स्तुत्वेत्यादि परुष्णीञ्च महानदीमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(२) परया परुष्णीमिन्द्रमिति क० ग० घ० च० ।
(३) प्रथममिति ख० पुस्तकान्तरञ्च ।
(४) आग्नेयन्तु ततः परमिति क० घ० च० ।
(५) आम इति ऐन्द्राणि तमितीति चेति क० ग० घ० च० ।
(६) दृष्ट्वेति क० घ० च० ।

---

(क) ऋ० ८, ७३, १ । (ख) ऋ० ८, ७४, १ । (ग) ऋ० ८, ७४, १३ । (घ) ऋ० ८, ७६, १ । (ङ) ऋ० ८, ७९, १ । (च) ऋ० ८, ८०, १ । (छ) ऋ० ८, ८०, १० । (ज) ऋ० ८, ८३, १ । (झ) ऋ० ८, ८४, १ । (ञ) ऋ० ८, ८५, १ । (ट) ऋ० ८, ८८, १ ।

तपसा बुबुधे सा तु सर्व्वमिन्द्रचिकीर्षितम्।
उदकुम्भं समादाय अपामर्थे जगाम सा[१] ॥१०१॥
दृष्ट्वा सोममपादास्ये तुष्टावर्चा वने तु तं।
कन्या वा[क]रिति चैतस्यामेषोऽर्थः कथितः स्तुतः[२] ॥१०२॥
सा सुषाव मुखात् सोमं स्तुत्वेन्द्रञ्चाजुहाव तं[३]।
असौ य एषी[ख]त्यनया पपाविन्द्रस्तु तन्मुखात्[४] ॥१०३॥
अपूपांश्चैव सक्तूंश्च भक्षयित्वा तु तद्गृहात्[५]।
ऋग्भिस्तुष्टाव सा चैनं जगादैनं ऋचेन तु[६] ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचां।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दरः[७] ॥१०५॥
रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च।

---

(१) क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धं, अपूपांश्चैव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम्।
(२) दृष्ट्वासोममपादास्ये इत्यादि एषोऽर्थः कथितः स्तुतः इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तके नोपलभ्यते।
(३) पपाविन्द्रस्तु तन्मुखादिति क॰ ग॰ घ॰ च॰।
(४) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(५) शतक्रतुरिति ख॰ ग॰ पुस्तकान्तरञ्च।
(६) असौ भूते दूषेण सेति ख॰ पुस्तकान्तरञ्च।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेक्ष्यते।

---

(क) ऋ॰ ८, ८१, १। (ख) ऋ॰ ८, ८१, २।

प्रच्छिद्य निष्कर्ष त्वचः सुत्वक् सा तु ततोऽभवत्[१] ॥१०६॥
तस्यां त्वचि व्यपेतायां पूर्व्वस्यां शल्लको[२]ऽभवत् ।
उत्तरा त्वभवद्गोधा कृकलासस्त्वगुत्तमा ॥१०७॥
इतिहासमिमं[३] सूक्तं त्वाहतुर्यास्कमाठरौ[४] ।
कन्ये[क]ति शौनकः सूक्ते पान्त[ख]मैन्द्रे ततः परे[५] ॥१०८॥
उत्तमा चार्भवी प्रोक्ता उत्तरस्त्वैतरेयके ।
छान्दोगिके तृतीये तदार्भवं श्रूयते यतः[६] ॥१०९॥
मारुतं गौः[ग] परं सूक्तमा त्वै[घ]न्द्राणि[७] पराणि षट् ।
सूक्ते द्वितीय एतेषामितिहासं प्रचक्षते[८] ॥११०॥

---

(१) ततः सा सुत्वचाभवदिति ङ॰ पुस्तकान्तरञ्च ।
(२) तस्यास्त्वगपवृत्तायाः पूर्व्वा सा शल्यकः इति क॰ ग॰ घ॰ च॰ ।
(३) इदमिति क॰ ग॰ घ॰ च॰ ।
(४) यास्कभागुरिरिति क॰ ग॰ घ॰ च॰ यास्कगालवाविति ङ॰ पुस्तकान्तरञ्च ।
(५) शौनकस्त्वैन्द्रं पान्तमित्युत्तरे च ये इति क॰ ।
(६) उत्तमा चार्भवीत्यादिश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापश्यत ।
(७) ह्यात्वैन्द्राणीति क॰ ग॰ घ॰ च॰ ।
(८) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ॰ ८, ९१, १ । (ख) ऋ॰ ८, ९२, १ । (ग) ऋ॰ ८, ९४, १ । (घ) ऋ॰ ८, ९५, १ ।

तपसा बुबुधे सा तु सर्व्वमिन्द्रचिकीर्षितम्।
उदकुम्भं समादाय अपामर्थं जगाम सा[(१)] ॥१०१॥
दृष्ट्वा सोममपादाय्ये तुष्टावर्चा वने तु तं।
कन्या वा[(क)]रिति चैतस्यामेषोऽर्थ कथितः सुत[(२)] ॥१०२॥
सा सुषाव मुखात् सोमं सुतेन्द्रञ्चाजुहाव तं[(२)]।
असौ य एषी[(ख)]त्यनया पपाविन्द्रस्तु तन्मुखात्[(३)] ॥१०३॥
अपूपाद्येव सक्तूंश्च भक्षयित्वा तु तद्गृहात्[(४)]।
स्तुभिस्तुष्टाव सा चैनं जगादैनं वचेन तु[(६)] ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचां।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दर[(७)] ॥१०५॥
रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च।

(१) क० ग० घ० च० चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धं, अपूपाद्येव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम्।
(२) दृष्ट्वासोममपादाय्ये इत्यादि एषोऽर्थं कथितः सुत इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तके नोपलभ्यते।
(३) पपाविन्द्रस्तु तन्मुखादिति क० ग० घ० च०।
(४) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(५) शतक्रतुरिति ख० ङ० पुस्तकान्तरञ्च।
(६) असौ ब्रूते वृचेन सेति ङ० पुस्तकान्तरञ्च।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(क) ऋ० ८, ९१, १। (ख) ऋ० ८, ९१, २।

इयाय देवानायन्तं[१] तं पशुर्विधिवत्सुराः ।
जघ्नुः पीत्वा च दैत्यानां समरे[२] नवतीर्नव ॥११६॥
तदेतदप्यवद्रप्स[३](क)स्तृचे सर्वं निगद्यते ।
तृचस्य देवतां तस्य[४] इन्द्रमेवाह शौनकः ॥११७॥
ऐन्द्राबार्हस्पत्य उक्ता ब्राह्मणे त्वैतरेयके[५] ।
तृचेनेन्द्रमपश्यन् तं [६]नेमोऽय(ख)मिति भार्गवः ॥११८॥
तुष्टावेन्द्रो वृषेनाय(ग)मत्वं पश्य च साम्प्रते ।
स हि स्तुवन्नेव एको नेन्द्रा[७] अस्तीति चाब्रवीत् ॥११९॥
तदाकर्ण्येन्द्र आत्मानमृग्भ्यां तुष्टाव दर्शयन्[८] ।

(१) ध्यादायेति क॰ ग॰ घ॰ च॰ ।

(२) इतरा इति क॰ घ॰ च॰ ।

(३) तदेतदपि यतस्मिन्निति क॰ ग॰ घ॰ ।

(४) देवता ह्येता इति ख॰ ग॰ ख॰ पुस्तकान्तरच ।

(५) श्लोकार्द्धमेतत् क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।

(६) अदृश्यन्तमिति क॰ घ॰ च॰,ऐन्द्रमपश्यन् तमिति ख॰ पुस्तकान्तरच ।

(७) इन्द्र' इति पाठः साधुः ।

(८) स हि स्तुवन्नेव एक इत्यादि ऋग्भ्यां तुष्टाव दर्शयन्नित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितः ।

(क) ऋ॰ ८, ८६, १३ । (ख) ऋ॰ ८, १००, ३ । (ग) ऋ॰ ८, १००, ४ ।

अपक्रम्य तु[१] देवेभ्यः सोमो वृत्रभयार्दितः ।
नदीमंशुमतीनामभ्यतिष्ठत् कुरून्[२] प्रति ॥१११॥
तं बृहस्पतिरेकेन अभ्ययाद्[३]वृत्रहा सह ।
योत्स्यमानः सुसंहृष्टै[४]र्मरुद्भिर्विविधायुधैः ॥११२॥
दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः ।
मन्वानो वृत्रमायान्तं[५] जिघांसुमरिसेनया ॥११३॥
व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः ।
मरुत्पतिरयं सोम एहि[६] देवान्[७] पुनर्विभो ॥११४॥
श्रुत्वा देवगुरोर्वाक्यमनघं वृत्रशङ्कया[८] ।
सोऽब्रवीन्नेति तं शक्र ओजसैव[९] बलाद्बली ॥११५॥

---

(१) अपचक्रामेति ख० ङ० पुस्तकान्तरञ्च ।
(२) अंशुमती नामा अभ्यतिष्ठद्‌कुरूनिति क० ग० घ० च०, अभ्यतिष्ठत् कुरूनिति ख० ङ० ।
(३) अभ्ययादिति पाठः साधुः । वृत्रान्वयादिति ङ० पुस्तकान्तरञ्च ।
(४) योत्स्यमानश्च संहृष्टैरिति क० घ० च० ।
(५) दृष्ट्वा तानायतांस्सोमं स्वबलेन व्यवस्थितम् । मन्वानं वृत्रमायान्तमिति क० घ० च० ।
(६) मरुत्पतिरयं सोममेहीति क० ग० घ० च० ।
(७) देवेति पाठः समीचीनः ।
(८) श्लोकार्द्धमेतद् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(९) स्वर्गं एवेति क० घ० च० ।

मैत्रावरुण्यः सूक्तस्याद्यास्तिस्रस्त्वृध[क]गित्यृचः ॥२२५॥
प्रे[ख]ति मित्राय वा पादस्त्वार्य्यम्णो[१] वरुणस्य च ।
नय[ग]स्तुर्थः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या[२] आम[घ] इत्याश्विनो द्वृचः[३] ।
वायव्ये चोत्तरे सौर्य्यौ औषसी त्वृगियं[ङ] परा[४] ॥१२७॥
पावमानी प्रजा ह्वे[च]ति माते[छ]त्यृग्भ्यान्तु गौः स्तुता ।
त्वमग्ने बृह[ज]दाग्नेये परेऽग्निस्तृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रैश्च आग्ने याही[झ]ति मध्यमः ।
प्रजा ह्वे[ञ]त्यपि वार्द्धर्चे प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः ।

---

(१) मित्राय पादश्चार्य्यम्णः इति क॰ ख॰ ग॰ घ॰ ।

(२) ऋच आदित्यदेवत्या इति ङ॰ पुस्तकान्तरञ्च ।

(३) द्व्यृचः इति ग॰ ।

(४) सौर्य्यं औषस्या प्रभा वा चन्द्रसूर्य्ययोरिति ख॰ ङ॰ पुस्तकान्तरञ्च । औषस्या इत्यत्र उषसेति ग॰ ।

---

(क) ऋ॰ ८, १०१, १। (ख) ऋ॰ ८, १०१, ५। (ग) ऋ॰ ८, १०१, ४। (घ) ऋ॰ ८, १०१, ७। (ङ) ऋ॰ ८, १०१, ११। (च) ऋ॰ ८, १०१, १४। (छ) ऋ॰ ८, १०१, १५। (ज) ऋ॰ ८, १०२, १। (झ) ऋ॰ ८, १०२, १३। (ञ) ऋ॰ ८, १०२, १४।

ऋषिस्तु दृष्ट्वा(१) सुप्रीतो विश्वेत्तात(क)इति तृचे ॥१२०॥
विविधानि च कर्म्माणि दानमैन्द्रञ्च शंसति ।
मनोजवा(ख)स्तु सौपर्णी(२) समुद्रे(ग) वज्रसंस्तवः ॥१२१॥
वाचं सर्व्वगतां देवीं(घ) स्तौति यद्वा(ङ)गिति तृचे ।
चौंल्लोकानभितर्येमान्(३) वृत्रस्तस्थौ स्वयं त्विषा ॥१२२॥
तं नाशकं हन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य(४) ममान्तिके ॥१२३॥
उद्यतस्य तु(५) वज्रस्य द्यौर्ददातु(६) ममान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरन्ददौ ॥१२४॥
तदेतदखिलं प्रोक्तं विष्णाविति सखे(च)तृचि(७) ।

(१) तं दृष्ट्वर्षिरेवेति ख० ङ० पुस्तकान्तरञ्च ।
(२) सौवर्णीति ख० ङ० ।
(३) ऋभितस्थेमानिति ख० ङ० पुस्तकान्तरञ्च ।
(४) वृत्रं हनावविक्रम्य तिष्ठस्वाद्येति ख० ङ० पुस्तकान्तरञ्च।
(५) उद्यतस्यैवेति क० घ० च० ।
(६) दद्यादिति क० घ० च० ।
(७) सर्व्वमद्यिपिप्रोक्तं सखेतृचीति क० ग० घ० च० ।

(क) ऋ० ८, १००, ६ ।　(ख) ऋ० ८, १००, ८ ।　(ग) ऋ० ८, १००, ९ ।　(घ) ऋ० ८, १००, ११ ।　(ङ) ऋ० ८, १००, १० ।　(च) ऋ० ८, १००, १२ ।

मैत्रावरुण्यः सूक्ताद्यास्तंसस्त्वृध[क]गित्यृचः ॥२२५॥
प्रे[ख]ति मित्राय वा पादाश्चार्य्यम्णो[१] वरुणस्य च ।
नय[ग]श्चतुर्थः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या[२] आम[घ] इत्याश्विनो द्वृचः[३] ।
वायव्ये चोत्तरे सौर्य्ये औषसी त्वृगियं[ङ] परा[४] ॥१२७॥
पावमानी प्रजा ह्रे[च]ति माते[छ]त्यृग्भ्यान्तु गौः स्तुता ।
त्वमग्ने वृह[ज]दाग्नेये परेऽग्निस्तृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रैश्च आग्ने याहो[झ]ति मध्यमः ।
प्रजा ह्रे[ञ]त्यपि वार्द्ध्वं प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः ।

---

(१) मित्राय पादश्चार्य्यम्णः इति क॰ ख॰ ग॰ घ॰ ।
(२) ऋच आदित्यदेवत्या इति ङ॰ पुस्तकान्तरञ्च ।
(३) द्वृचः इति ग॰ ।
(४) सौर्य्यं चौषस्या प्रभा वा चन्द्रसूर्य्ययोरिति ख॰ ङ॰ पुस्तकान्तरञ्च । चौषस्या इत्यत्र उषसेति ग॰ ।

---

(क) ऋ॰ ८, १०१, १ । (ख) ऋ॰ ८, १०१, ५ । (ग) ऋ॰ ८, १०१, ४ । (घ) ऋ॰ ८, १०१, ७ । (ङ) ऋ॰ ८, १०१, १३ । (च) ऋ॰ ८, १०१, १४ । (छ) ऋ॰ ८, १०१, १५ । (ज) ऋ॰ ८, १०२, १ । (झ) ऋ॰ ८, १०२, १४ । (ञ) ऋ॰ ८, १०२, १४ ।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[१] ॥१२०॥
पावमानः स्तुतः सोमो नवमे त्विह मण्डले[२] ।
पवमानवदाग्नेयस्तु[३] समिद्ध [क]इति संस्तुतः ॥१२१॥
अग्न आयूंषी[ख]ति चास्य तिस्रस्वग्निर्निपातभाक् ।
अविता न[ग] इति त्वस्मिंस्तृचे पूष्णा[४] सह स्तुतः ॥१२२॥
आग्नेय्यौ द्वे ऋचावच यत्त [घ]इत्युत्तरे ततः ।
उभाभ्या[ङ]मिति सावित्री अग्निसावित्र्य[५]गुत्तरा ॥१२३॥
पुनन्तु मां[च] वैश्वदेवी आग्नेयी त्वगुपप्रियम्[छ] ।
पडुत्तरा[६] य[ज] इत्यृच[७] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

---

(१) प्रजा ह्येत्यपि वार्द्धके इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते ।
(२) नवमे मण्डलेऽर्षिभिरिति क० घ० च०, मण्डलर्षिभिरिति ग० ।
(३) पवमानवदाग्नेयः इति ख० ।
(४) पूषेति ख० ङ० पुस्तकान्तरञ्च ।
(५) चाग्न्यासावित्रीति ख० ।
(६) सप्तोत्तराः इति ख० ङ० पुस्तकान्तरञ्च ।
(७) उत्तरे च य इत्येवीति ग० ।

---

(क) ऋ० ९, ५, १ । (ख) ऋ० ९, ६६, १९ । (ग) ऋ० ९,६७,२० ।
(घ) ऋ० ९, ६७, २३ । (ङ) ऋ० ९, ६७, २५ । (च) ऋ० ९, ६७, २७ ।
(छ) ऋ० ९, ६७, २९ । (ज) ऋ० ९, ६७, ३१ ।

सूक्ते निरुक्ते सूक्ते(क)ऽग्निं रक्षोहा घर्मसंस्तवः(१) ।
सूर्यवच्चात्मवच्चाथ(१) पवित्रं(ख)मिति चोच्यते ॥१२५॥
आर्भवस्तु भवेत्पाद ऋभुर्धीर(ग) इति स्तुतः ।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः(२) ॥१२६॥
ब्रह्मा देवानां तिस्रोक्ताम्त्रिभिस्त्वेतैर्हुचेर्च्चैः(३) ।
सूर्यवच्चात्मवच्चायं(४) स्तूयते सोम(घ) इत्यपि(५)॥१२७॥
अनावृष्ट्यां तु वर्त्तन्यां पप्रच्छर्षीञ्छचीपतिः ।
काले दुर्गे महत्यस्मिन् कर्म्मणा केन जीव्यथ ॥१२८॥
शकटं शाकिनी गावः क्षुपिरस्यन्दनं वनं(७) ।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१२९॥
अथ स्तुवन्(८) शशंसास्य ह्युपिराङ्गिरसः शिशुः ।

---

(१) एतच्छ्लोकार्द्धं ङ॰ चिह्नितपुस्तके न पठितम् ।
(२) सूर्यवर्चात्मवर्चापीति क॰ घ॰ च॰ ।
(३) एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।
(४) तृचादृचैरिति क॰ ग॰ घ॰ च॰ ।
(५) सूर्यवर्चात्मवर्चापीति क॰ घ॰ च॰ ।
(६) एव वेति क॰ ग॰ घ॰ च॰ ।
(७) अदरस्य नन्दनन्दनमिति ख॰ । एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापठ्यत ।
(८) स्तुवन्नेवेति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ ९, ७३, १। (ख) ऋ॰ ९, ८३, १। (ग) ऋ॰ ९, ८९, १। (घ) ऋ॰ ९, १०७, ७।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[१] ॥१२०॥
पावमानः स्तुतः सोमो नवमे त्विह मण्डले[२]।
पवमानवदाप्येस्तु[३] समिद्ध (क)इति संस्तुतः ॥१२१॥
अग्न आयूंषी(ख)ति यास्तु तिसृष्वग्निर्निपातभाक्।
अविता न(ग) इति त्वस्मिंस्तृचे पूष्णा[४] सह स्तुतः॥१२२॥
आग्नेय्यौ द्वे स्वधावन्न यत्त (घ)इत्युत्तरे ततः।
उभाभ्या(ङ)मिति सावित्री अग्निसावित्र्य[५]गुत्तरा ॥१२३॥
पुनन्तु मां(च) वैश्वदेवी आग्नेयी त्वगुपप्रियम्(छ)।
षडुत्तरा[६] य(ज) इत्यत्र[७] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

---

(१) प्रजा ह्येत्यपि वाऽर्द्धं इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते।
(२) नवमे मण्डलेऽर्षिभिरिति क० घ० च०, मण्डलर्षिभिरिति ग०।
(३) पवमानवदाप्रीयः इति ख०।
(४) पूषेति ख० ग० पुस्तकान्तरञ्च।
(५) चान्याग्निसावित्रीति ख०।
(६) षळोत्तराः इति ख० घ० पुस्तकान्तरञ्च।
(७) उत्तरे च य इत्येवीति ग०।

---

(क) ऋ० ९, ५, १। (ख) ऋ० ९, ६६, १९। (ग) ऋ० ९,६७,१०।
(घ) ऋ० ९, ६७, २३। (ङ) ऋ० ९, ६७, २५। (च) ऋ० ९, ६७,२७।
(छ) ऋ० ९, ६७, २९। (ज) ऋ० ९, ६७, ३१।

सूक्ते निरुक्ते सक्ते[क]ऽग्नि रक्षोहा घर्म्मसंस्तवः[1] ।
सूर्य्यवच्चात्मवच्चाच[2] पवित्र[ख]मिति चोच्यते ॥१२५॥
आर्भवस्तु भवेत्पाद ऋभुर्धीर[ग] इति स्मृतः ।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः[3] ॥१२६॥
ब्रह्मा देवानां तिस्रोकास्त्रिभिस्त्वेतैर्हृचैश्च चैः[4] ।
सूर्य्यवच्चात्मवच्चायं[5] स्तूयते सोम[घ] इत्यपि[6] ॥१२७॥
अनावृष्ट्यां तु वर्त्तन्यां पप्रच्छर्षीञ्छचीपतिः ।
काले दुर्गे महत्यस्मिन् कर्म्मणा केन जीव्यथ ॥१२८॥
शकटं शाकिनी गावः क्षपिरस्यन्दनं वनं[7] ।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१२९॥
अथ स्तुवन्[8] प्रशंसास्य ऋषिराङ्गिरसः शिशुः ।

---

(१) एतच्छ्लोकार्द्धं ङ॰ चिह्नितपुस्तके न पठितम् ।
(२) सूर्य्यवर्चात्मवर्चापीति क॰ घ॰ च॰ ।
(३) एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।
(४) हृचाहृचैरिति क॰ ग॰ घ॰ च॰ ।
(५) सूर्य्यवर्चात्मवर्चापीति क॰ घ॰ च॰ ।
(६) एव चेति क॰ ग॰ घ॰ च॰ ।
(७) ऋटरस्य नन्दनन्दनमिति ख॰ । एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापठ्यत ।
(८) स्तुवन्नेवेति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ ३, ७३, २ । (ख) ऋ॰ ९, ८३, १ । (ग) ऋ॰ ९, ८७, ३ । (घ) ऋ॰ ९, १०७, ७ ।

नानानीयेन[क] सूक्तेन ऋषीणामेव[१] सन्निधौ ॥१४०॥
तानिन्द्रः प्राब्रवीत् सर्व्वां[२]स्तपध्वं सुमहत्तपः ।
नातप्ततपसः शक्यमिदं[३] कृत्स्नं व्यपोहितुं ॥१४१॥
अथ ते वै तपस्तेपुः सर्व्वे स्वर्गजिगीषवः ।
ततस्ते तपसोऽयेण पावमानीर्ऋचोऽब्रुवन् ॥१४२॥
अनसूयुरधीयानः शुश्रूषुस्तपसान्वितः ।
दश पूर्व्वापरान् वंश्यान् पुनात्यात्मानमेव च ॥१४३॥
पापं यच्चा[४]करोत्किञ्चिन्मनोवाग्देहभोजनैः[५] ।
पूतः स तस्मात् सर्व्वस्मात् स्वाध्यायफलमश्नुते[६] ॥१४४॥
पावमान्यः परं ब्रह्म शुक्रं ज्योतिः सनातनं[७] ।
गायत्र्योऽन्त्योऽत्र यद्यासां प्राणानायम्य तन्मनाः[८] ॥१४५॥
पावमानं पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम् ।

---

(१) ऋवेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) स्ताह सर्व्वांस्त्विति क॰ ग॰ घ॰ च॰ ।
(३) न ह्येतत्तपसा शक्यं विनेति क॰ ग॰ घ॰ च॰ ।
(४) यद्येति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(५) मनोवाग्देहदो जनैरिति क॰ घ॰ च॰, मनोवाग्देहतो जनैरिति ग॰ ।
(६) ऋषिसालोक्यमाप्नुयादिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(७) ज्योतिस्सनातनमिति क॰ घ॰ च॰ ।
(८) एष श्लोकः ख॰ ङ॰ पुस्तकयोर्न विद्यते ।

---

(क) ऋ॰ ८, ११२, १ ।

पितॄंस्तत्रोपवर्तेत[1] वीरं सर्पिर्मधूदकम् ॥१४६॥
एतत् सूक्तं शतं सौम्यं मण्डलं सचतुर्दशम्।
पावमान[2]मिति ख्यातमनुवाकास्तु सप्त वै[3] ॥१४७॥
सप्ताग्नेयानि सूक्तानि ददर्शाप इति चितः।
प्रकेतुने[क]ति त्वाष्ट्रस्तु त्रिशिराः सूक्तमुत्तरम् ॥१४८॥
ध्रुवस्तस्य[4] पडाग्नेय्यस्तुचस्त्वष्टे[ख]ति[5] यः परः।
तेनेन्द्रमभितुष्टाव स्वप्नान्त इति नः[6] श्रुतिः ॥१४९॥
अभवत्स हि[7] देवानां पुरोधाः प्रियकाम्यया[8]।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपधृत् ॥१५०॥
तमृषिं प्रहित[9]न्त्विन्द्रो देवेषु बुबुधेऽसुरैः।

---

(१) उपतिष्ठेतेति ङ० पुस्तकान्तरेषु।
(२) वीजमात्रमिति ख०।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(४) तस्येति ख०।
(५) त्वचस्यास्येतीति ख०।
(६) न श्रुतिरिति क० घ० च०, श्रुतमिति ख०, पुस्तकान्तरेषु। एष श्लोकः ग० चिह्नितपुस्तके न पठितः।
(७) स हेति ख० ङ०।
(८) प्रयदाम्ययेति ख० ख० पुस्तकान्तरेषु।
(९) तं श्रवन् प्रहिता इति क० घ० च०। प्रहित इति ग०।

---

(क) ऋ० १०, ८, १। (ख) ऋ० १०, ८, ७।

नानानीयेन(क) सूक्तेन ऋषीणामेव(१) सन्निधौ ॥१४०॥
तानिन्द्रः प्राब्रवीत् सर्व्वां(२)स्तपध्वं सुमहत्तपः।
नातप्ततपसः शक्यमिदं(३) कृत्स्नं व्यपोहितुं ॥१४१॥
अथ ते वै तपस्तेपुः सर्व्वे स्वर्गजिगीषवः।
ततस्ते तपसोयेण पावमानीर्ऋचोऽब्रुवन् ॥१४२॥
अनसूयुरधीयानः शुश्रूषुस्तपसान्वितः।
दश पूर्व्वापरान् वंश्यान् पुनात्यात्मानमेव च ॥१४३॥
पापं यथा(४)करोत्किञ्चिन्मनोवाग्देहभोजनैः(५)।
पूतः स तस्मात् सर्व्वस्मात् स्वाध्यायफलमश्नुते(६) ॥१४४॥
पावमान्यः परं ब्रह्म शुक्रं ज्योतिः सनातनं(७)।
गायत्र्योऽन्योऽत्र यस्त्वासां प्राणानायम्य तन्मनाः(८) ॥१४५॥
पावमानं पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम्।

---

(१) इवेति ख॰ ङ॰ पुस्तकान्तरयः।
(२) ताह सर्व्वांस्त्विति क॰ ग॰ घ॰ च॰।
(३) न ह्यतप्ततपसा शक्यं विनेति क॰ ग॰ घ॰ च॰।
(४) यथेति ख॰ ङ॰ पुस्तकान्तरयः।
(५) मनोवाग्देहदो जनैरिति क॰ घ॰ च॰, मनोवाग्देहतो जनैरिति ग॰।
(६) ऋषिवाणीक्यमाप्नुयादिति ख॰ ङ॰ पुस्तकान्तरयः।
(७) ज्योतिःसनातनमिति क॰ घ॰ च॰।
(८) एष श्लोकः ख॰ ङ॰ पुस्तकयोर्न विद्यते।

---

(क) ऋ॰ ९, ११२, १।

पितॄंस्तस्योपवर्तेत[१] चीरं सर्पिर्मधूदकम् ॥१४६॥
एतत् सूक्तं शतं सौम्यं मण्डलं सचतुर्दशम् ।
पावमान[२]मिति ख्यातमनुवाकास्तु सप्त वै[३] ॥१४७॥
सप्ताग्नेयानि सूक्तानि ददर्शाथ इति चितः ।
प्रकेतुने[क]ति त्वाष्ट्रस्तु त्रिशिराः सूक्तमुत्तरम् ॥१४८॥
त्र्यचस्त्वस्य[४] षडाग्नेय्यस्तृचस्त्वस्ये[ख]ति[५] यः परः ।
तेनेन्द्रमभितुष्टाव स्वप्नान्त इति नः[६] श्रुतिः ॥१४९॥
अभवत्स हि[७] देवानां पुरोधाः प्रियकाम्यया[८] ।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपभृत् ॥१५०॥
तमृषिं प्रहित[९]न्त्विन्द्रो देवेषु बुबुधेऽसुरैः ।

---

(१) उपतिष्ठेतेति ङ० पुस्तकान्तरञ्च ।
(२) वीजमाप्तमिति ख० ।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(४) तस्येति ङ० ।
(५) त्र्यचस्यास्येतीति ङ० ।
(६) न श्रुतिरिति क० घ० च०, श्रुतमिति ङ०, पुस्तकान्तरञ्च । एष श्लोकः ख० चिह्नितपुस्तके न पठितः ।
(७) स हेति ख० ङ० ।
(८) प्रियकाम्येति ख० ङ० पुस्तकान्तरञ्च ।
(९) तं ऋजन् प्रहितः इति क० घ० च० । प्रहित इति ग० ।

---

(क) ऋ० १०, ८, १ । (ख) ऋ० १०, ८, ७ ।

सोऽस्य वज्रेण तान्याशु[१] शिरांसि चौण्यचिच्छिदत्[२] ॥१५१॥
तस्य यत्सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः ।
कलविङ्कः सुरापानमन्नादं तित्तिरि[३]स्त्वभूत् ॥१५२॥
तं वागभ्यवदद्ब्राह्मी[४] ब्रह्महासि शतक्रतो ।
प्रपन्नं हतवान् यस्माद्[५] विश्वरूपं पराङ्मुखम् ॥१५३॥
तमभ्यषिञ्चत् सूक्तेन ऋषि[६]राप[क] इति स्वयम् ।
सिन्धुद्वीपोपनुत्यर्थं तस्मान्नीलस्य पाप्मनः ॥१५४॥
मैथुनार्थमभीप्सन्तीं प्रत्याचष्टे यमीं यमः ।
ओचित् सखायं[ख][७] संवादे[८] विवस्वत्सु तयोस्तयोः ॥१५५॥
पृथा[ग]ग्नेये हविर्धाने युजे वा[घ]मच[९] संस्तुते ।
परेयिवांस[ङ]मित्यत्र स्तूयते मध्यमो यमः[१०] ॥१५६॥

---

(१) सोऽस्य वज्रेण तस्याशु इति क० घ० च० ।
(२) तान्याशु शिरांसि चौण्यथाच्छिनदिति ग० । शिरांस्येवाच्छिदत् प्रभुः इति ख० पुस्तकान्तरञ्च ।
(३) तित्तिरः इति ख० घ० पुस्तकान्तरञ्च ।
(४) तोमेति क० घ० च० ।
(५) यस्मिन्निति क० घ० च० ।
(६) ऋषिरिति क० ग० घ० च० ।
(७) तदोचिदितीति क० ग० घ० च० ।
(८) संवादे इति क० घ० च० ।
(९) युजन्धेतन्नेति क० ग० घ० च० ।
(१०) इत्येतस्मिन् स्तूयते यमाह्वयः इति क० घ० च० ।

---

(क) ऋ० १०, ९, १ । (ख) ऋ० १०, १०, १ । (ग) ऋ० १०, ११, १ ।
(घ) ऋ० १०, १२, १ । (ङ) ऋ० १०, १४, १ ।

अथर्वाणोऽथ भृगवः पितरोऽङ्गिरसश्च[क] ह ।
षष्ठ्यां देवगणास्तत्र संस्तूयन्ते शुभकृयः ॥१५७॥
पितृभिश्चाङ्गिरोभिश्च संस्तुतो दृश्यते यमः ।
मन्त्रेषु वङ्गशः पादे विवस्वन्तं पिता हि सः ॥१५८॥
संस्कार्य्यप्रेतसंयुक्तैः पितृभिः स्तूयते यमः ।
प्रेहि प्रेही[ख]ति तिसृषु प्रेताग्निष उदाहृताः ॥१५९॥
पितॄणां हि पतिर्देवो यमस्तस्मात् स सूक्तभाक्[१] ।
अतिद्रव[ग]दृचे श्वानौ परं पित्र्यमुदीरितम्[२] ॥१६०॥
परेणैव[३] तु सूक्तेन श्मशाने कर्म्म शंसति[४] ।
पितृदेवासुराणाञ्च अभवन्नग्नयस्त्रयः ॥१६१॥
हव्यकव्यवहौ चोभौ सह रक्षास्विना सह[५] ।
तत्र मैन[घ]मिति त्वेतत्कव्यवाहनसंस्तुतिः[६] ॥१६२॥

---

(१) अथर्वाणोऽथ भृगवः इत्यादिसार्द्धश्लोकत्रयं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(२) उदीरितामिति क० ग० घ० च० ।
(३) उत्तरेणेति ग० ।
(४) एतच्छ्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न पठितम् ।
(५) सहरक्षा च नामयः इति ख० ङ० पुस्तकान्तरञ्च ।
(६) त्वाह कव्यवाहनमेवचेति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, १४, ६ । (ख) ऋ० १०, १४, ७ । (ग) ऋ० १०, १४, १० ।
(घ) ऋ० १०, १६, १ ।

इतराणि तु देवस्य[1] स्तुतिर्नामासुरस्य च[2]।
अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह[3] ॥१६३॥
स वै सरण्यूं प्रायच्छत् स्वयमेव विवस्वते।
ततः सरण्व्यां[4] जज्ञाते यमयम्यौ विवस्वतः।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यान्तु वै यमः ॥१६४॥

इति बृहद्देवतायां षष्ठोऽध्यायः ॥६॥

---

(१) देवस्येति ग०, दैवस्येति ख०।
(२) त्रिशिर ख० घ० पुस्तकान्तरेषु।
(३) सहसौ च हेति ख० ग० घ०।
(४) सरण्वा इति ख० घ० पुस्तकान्तरेषु।

## अथ सप्तमोऽध्यायः ।



दृष्ट्वा[१] भर्तुः परोचन्तु सरण्यूः सवर्णां स्त्रियम् ।
निक्षिप्य मिथुन[२] तस्यामश्वा भूत्वापचक्रमे[३] ॥१॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि[४] विवस्वानिव तेजसा ॥२॥
स विज्ञाय[५] त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वाश्वलक्षणः[६] ॥३॥
सरण्यूस्च[७] विवस्वन्तं विदित्वा[८] हयरूपिणम्[९] ।

---

(१) दृष्टेति क॰ घ॰ च॰ ।
(२) मैथुनमिति पाठ साधु ।
(३) अश्वो भूत्वोपचक्रमे इति क॰ ग॰ च॰ ।
(४) राजर्षिरासीत् स मनुरिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(५) *विज्ञायेति ग॰ ।*
(६) सलक्षण इति क॰ घ॰ च॰, सलक्षणः इति ग॰ ।
(७) तमिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) विज्ञायेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(९) हरिरूपिणमिति पुस्तकान्तरम् ।

मैथुनायोपचक्राम[1] ताञ्च तत्रारुरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि ।
उपाजिघ्रच्च[2] सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः ।
नासत्यश्चैव दस्रश्च यौ सुतावश्विनाविति[3] ॥६॥
इतिहासमिमं यास्कः सरण्यूदेवते ऋचे[4] ।
विवस्वतश्च त्वष्टुश्च त्वष्टे[क]ति सह मन्यते ॥७॥
पूषे[ख]ति पादौ पौष्णौ द्वौ त्वाग्नेया[5]वुत्तरौ तु यौ ।
स्यात्तृतीयोऽपि वा पौष्णस्तिस्रस्त्वन्याः परास्तु याः[6] ॥८॥
अपां स्तुतिस्तृचैका[7] त्वचात्मारस्ततात्परा ।
स्तुतः परोक्षः सोमस्तु द्रप्स[ग] इत्युत्तरे त्वचे ॥९॥
अब्देवताशीर्वादो[8] वा पयस्वत्यु[घ]त्तरा तु या ।

(१) मिथुनायायचक्रामेति ख० ङ० पुस्तकान्तरच ।
(२) उपजिघ्रतीति क० ग० घ० ।
(३) यो तु तौ वाजिनाविताविति क० ग० घ० ।
(४) ऋचाविति क० ग० घ०, तृचे इति ङ० पुस्तकान्तरच ।
(५) द्वावाग्नेयाविति ङ० पुस्तकान्तरच ।
(६) पौष्णस्त्वपरस्तृच इति ख० ङ० पुस्तकान्तरच ।
(७) अपां स्तुति स्तुतिस्त्वेकेति ख०, अपां स्तुतिस्तुतस्त्वैकेति ङ० पुस्तकान्तरच ।
(८) अब्देवत्याशीर्वादः इति ख० ङ०, पुस्तकान्तरच ।

(क) ऋ० १०, १७, १ । (ख) ऋ० १०, १७, ३ । (ग) ऋ० १०, १७, ११ ।
(घ) ऋ० १०, १७, १४ ।

पतयस्ताः स्मृतिर्म्मर्त्यो(क)रन्ते क्रियास्व(१) कर्म्मणि ॥१०॥
मृतग्निरेभ्य आशास्ते इमे(ख) ज्योग्जीवनं पुनः ।
इमं जीवेभ्य(ग) आशास्ते तेभ्यः परिधिकर्म्मणि(२) ॥११॥
यथा(घ) धात्र्युत्तरा लाक्षी ततो यान्या इमा(ङ)स्त्विति(३) ।
स्त्रीणामाशिषमाशास्ते तथैवाञ्जनकर्मणि(४) ॥१२॥
उदीर्ष्व नारीत्यनया मृत(च)पत्नीं तु रोदतीं(५) ।
भ्राता कनीयान् प्रेतस्य निगदात्(६) प्रतिषेधति ॥१३॥
कुर्य्यादेतत् कर्म्म होता देवरो न भवेद्यदि ।
प्रेतानुगमनं न स्यादिति ब्राह्मणशासनात् ॥१४॥
वर्णानामितरेषाञ्च स्त्रीधर्म्मोऽयं भवेन्न वा(७) ।
शान्त्यर्थं धनुरादाने प्रेतस्यैव धनु(छ)र्जपेत्(८) ॥१५॥

---

(१) त्विति ङ० ।
(२) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(३) यथर्धाच्युत्तरश्लोकोक्ती ततो यान्या इमास्त्वितीति ख० ङ० पुस्तकान्तरश्च ।
(४) तथा परिधिकर्म्मणीति क० ग० घ० च० ।
(५) मृतं पत्न्यनुरोदतीति पाठः साधुः । मृतमन्वारुदोदतीति क० घ० च० ।
(६) निगतेति क० घ० च०, निगत्वेति ग० ।
(७) कुर्य्यादेतत् कर्म्म होतेति सार्द्धैकश्लोक क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(८) शान्त्यर्थं च जपत्यस्या, धनुरित्युत्तरामृचमिति क० ग० घ० च० ।

---

(क) ऋ० १०, १८, २ । (ख) ऋ० १०, १८, ३ । (ग) ऋ० १०, १८, ४ ।
(घ) ऋ० १०, १८, ५ । (ङ) ऋ० १०, १८, ७ । (च) ऋ० १०, १८, ८ ।
(छ) ऋ० १०, १८, ९ ।

यस्मादेताः प्रयुज्यन्ते श्मशाने चान्त्यकर्म्मणि[१]।
तस्माद्वदेत्तृचस्या[२]स्य देवतां मृत्युरेव[३] तु ॥१६॥
मन्त्रेषु ह्यनिरुक्तेषु देवतां कर्मतो वदेत्।
मन्त्रतः कर्मतश्चैव प्रजापतिरसम्भवे[४] ॥१७॥
पराद्यतस्रो यास्त्वत्र उपसर्प[क]ति पार्थिवी।
तासां प्रयोगः प्रेतस्य अस्थिसञ्चयकर्मणि ॥१८॥
प्रतीचीने[ख]यथाहानि अपद्वत्येतराणि तु[५]।
अहःसु[६] पितरो दधुरित्याभास्ते[७]ऽन्ययाशिषः[८] ॥१९॥
*अहःस्वागामिषु च मां द्रुयतः[९] समजीवयन्[१०]।*
निवर्त्तध्व[ग]मिदं सूक्तं[११] गवां केचिदपां विदुः ॥२०॥
अर्द्धर्चः प्रथमायास्तु[१२] अग्नीषोमीय उत्तरः।

(१) एते प्रयुज्यन्ते श्मशानेष्वन्त्यकर्म्मस्विति क० ग० घ० च०।
(२) तृचस्येति क० ग० घ० च०।
(३) मृत्युमेवेति पाठः समीचीनः।
(४) इदं जगाविति क० घ० च०।
(५) प्रतीचीनमृचं त्वेतामपवृज्योत्तरास्तु तत् इति ख० ङ० पुस्तकान्तरञ्च।
(६) अहस्स्विति ख० ङ० पुस्तकान्तरञ्च।
(७) दधुरभ्याभास्ते इति क० घ० च०।
(८) दधुरभ्याभास्ते समाशिषः इति ग०।
(९) प्रयतः इति ख०।
(१०) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(११) इतीदन्त्विति क० ग० घ० च०।
(१२) चेति ख० ङ० पुस्तकान्तरञ्च।

(क) ऋ० १०, १८, १०। (ख) ऋ० १०, १८, १४॥ (ग) ऋ० १०, १९, १।

ऐन्द्री षष्ठी द्वितीयायामुभौ देवौ निपातितौ ॥२१॥
दृशाचरन्तु प्राग्यथं मानसं सूक्तमुत्तरम्[१]।
चौष्णेन्द्राणि कुहे[क]त्यत्र आग्नेयाभ्यां पराणि तु ॥२२॥
द्वयोऽचास्याश्विन[२]स्त्वेक ऐन्द्राग्न[३] उत्तमे युवम्[ख]।
भद्रं[ग] सौम्यं प्रह्वि[घ]पौष्णं चौष्णेन्द्राणि पराण्यतः ॥२३॥
तेषामाद्येन मत्तः सन्[४] स्वानि कर्माणि शंसति।
यथा चरति भूतेषु यथा वर्षति पाति[५] च ॥२४॥
सूक्ते तदस्मिन्नष्टाभिर्ऋग्भि[६]रुक्तमभ्रू[ङ]रिति[७]।
प्रते[च]ति मरुतः स्तौति पर्जन्यं स्तौत्यृ[८]गुत्तरा ॥२५॥
अग्निमिन्द्रञ्च सोमञ्च पीवानं मेष[छ]मर्चति।
पूर्व्वोऽर्द्धर्च्चोऽपर[९]स्तस्याः पर्ज्जन्यं वायुना सह ॥२६॥

---

(१) उच्यते इति क॰ ग॰ घ॰ च॰।
(२) द्वयोऽस्यास्त्वाश्विन इति ङ॰।
(३) ऐन्द्राग्नमिति क॰ ग॰ घ॰ च॰।
(४) स इति क॰ घ॰ च॰।
(५) वातीति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) *तदस्मिन्नर्द्धर्चे त्वृग्भिरिति क॰ ग॰ घ॰ च॰।*
(७) अभूर्व्वितीति क॰ च॰, प्रभूर्व्वितीति ग॰।
(८) परमं स्तौति स्तौति वचमिति क॰ घ॰ च॰।
(९) पूर्व्वोऽर्द्धर्चोत्तरः इति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ १०, २२, १। (ख) ऋ॰ १०, २४, ६। (ग) ऋ॰ १०, २५, १।
(घ) ऋ॰ १०, २६, १। (ङ) ऋ॰ १०, २७, ७। (च) ऋ॰ १०, २७, १५।
(छ) ऋ॰ १०, २७, १७।

विक्रोशनाय[क] इत्यग्निरुत्तरा सूर्य्यमर्चति[१] ।
एतौ मे[ख]ऽयं य[ग]· इत्येते स्तुतिश्चैवेन्द्रवज्रयोः[२] ॥२७॥
वृत्रे वृत्रे[घ] धनुश्चैन्द्रं[३] देवाना[ङ]मिति तु तृचः ।
शीतोष्णवर्षदातारः पर्जन्यानिलभास्कराः ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे[४] सह ।
सा ते जीवातु[च]रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्य[छ]न्यत्र[५] संवाद[६] ऋषेः शक्रस्य चैव हि ।
युग्मा एव तु शक्रस्य अयुग्मा एव तु त्वृषेः[७] ॥३०॥
सुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम् ।
यज्ञे परोक्षवत् प्राह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भक्षयेत् स[ज] धानाः सोमं पिबेदपि ।
इति तस्या वचः श्रुत्वा तत्क्षणादेत्यवज्रभृक् ॥३२॥
तिष्ठन् वेश्मामुत्तरस्यामुच्चैराह परोक्षवत्[८] ।

(१) सर्वत्विति क० ग० घ० च० ।
(२) एता उभौ स्तेताविति स्तूयेते वज्रमुत्तरेति क० घ० च० ।
(३) ऐन्द्रीति क० घ० च०, ऐन्द्रीमिति ग० ।
(४) पदे संस्तूयते इति ख० ङ० पुस्तकान्तरञ्च ।
(५) ह्यन्यस्त्विति क० ग० घ० च० ।
(६) संवादमिति ख० ङ० ।
(७) युग्माः शक्रस्य विज्ञेया वसुकस्येतरा ऋचः इति ख० ङ० पुस्तकान्तरञ्च ।
(८) सुषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(क) ऋ० १०,२७,१८ । (ख) ऋ० १०,२७,२० । (ग) ऋ० १०,२७,२१ ।
(घ) ऋ० १०,२७,२२ । (ङ) ऋ० १०,२७,२३ । (च) ऋ० १०,२७,२४ ।
(छ) ऋ० १०, २८, १ । (ज) ऋ० १०, २८, २ ।

तृतीयया चतुर्थ्या च प्रदेवत्रे(क)त्यपां स्तुतिः(१) ॥२३॥
अपां नपा(ख)दित्यनेन नाम्नाग्नि(२)र्मध्यमः स्तुतः।
प्रति य(ग)दैश्वदेवन्त(३) त्तस्य प्रे(घ)त्यैन्द्रमुत्तरम्(४) ॥२४॥
वैश्वदेवी प्रमे(ङ)त्येका सं मे(च)त्यैन्द्री(५)द्वृचः(६) परः ॥
कुरु श्रवण(छ)मर्चन्ति(७) परे द्वे(८) त्रासदस्यवम् ॥२५॥
मृते मित्रातिथौ राज्ञि तं नपातम्नृषिः परैः।
उपमश्रवसं यस्य(ज) चतुर्भिः स व्यशोकयत् ॥२६॥
प्रावेपा(झ) इति सूक्तं यत्तदृचस्तुति(९)रुच्यते।
अत्रा(१०)चान् द्वादशी स्तौति नवम्याद्या च(११) सप्तमी ॥२७॥

---

(१) प्रदेवत्रेत्यपां स्तुताविति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) नामाग्निरिति क० घ० च०।
(३) त्विति क० ग० घ० च०।
(४) उत्तममिति ख० ङ० पुस्तकान्तरञ्च।
(५) तस्यास्त्वैन्द्रः इति क० घ० च०।
(६) द्व्यृचः इति ग०।
(७) ऋर्चन्तः इति ख० ङ० पुस्तकान्तरञ्च।
(८) पराः यदिति क० घ० च०।
(९) तच्चस्वेति क० घ० च०।
(१०) तचेति ख० ङ०।
(११) चयेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, ३०, १। (ख) ऋ० १०, ३०, ४। (ग) ऋ० १०, ३०, ११।
(घ) ऋ० १०, ३२, १। (ङ) ऋ० १०, ३३, १। (च) ऋ० १०, ३३, २।
(छ) ऋ० १०, ३३, ४। (ज) ऋ० १०, ३३, ६। (झ) ऋ० १०, ३४, १।

विक्रोशनास(क) इत्यग्निमुत्तरा सूर्य्यमर्चति(१)।
एतौ मे(ख)ऽयं य(ग) इत्येते स्तुतिश्चैवेन्द्रवज्रयोः(२) ॥२७॥
वृक्षे वृक्षे(घ) धनुश्चैन्द्रं(३) देवाना(ङ)मिति तु त्रयः।
शीतोष्णवर्षदातारः पर्जन्यानिलभास्कराः ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे(४) सह।
सा ते जीवातु(च)रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्यो(छ)त्यत्र(५) संवाद(६) ऋषेः शक्रस्य चैव हि।
युग्मा एव तु शक्रस्य अयुग्मा एव तु त्वृषेः(७) ॥३०॥
स्नुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम्।
यज्ञे परोक्षवत् प्राह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भक्षयेत् स(ज) धानाः सोमं पिबेदपि।
इति तस्या वचः श्रुत्वा तत्क्षणाद्दैत्यवज्रधृक् ॥३२॥
तिष्ठन् वेद्यामुत्तरस्यामुच्चैराह परोक्षवत्(८)।

(१) सवत्विति क० ग० घ० च०।
(२) स्तवा उभौ स्तवाविति स्तूयेते वज्रमुत्तरेति क० घ० च०।
(३) ऐन्द्रीति क० घ० च०, ऐन्द्रीमिति ग०।
(४) पदे संस्तूयते इति ख० छ० पुस्तकान्तरे च।
(५) त्वन्यस्त्विति क० ग० घ० च०।
(६) संवादमिति ख० छ०।
(७) युग्माः शक्रस्य विज्ञेया वसुक्रस्येतरा ऋचः इति ख० छ० पुस्तकान्तरे च।
(८) स्नुषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

(क) ऋ० १०,२७,१८। (ख) ऋ० १०,२७,२०। (ग) ऋ० १०,२७,२१।
(घ) ऋ० १०,२७,२२। (ङ) ऋ० १०,२७,२३। (च) ऋ० १०,२७,२४।
(छ) ऋ० १०, २८, १। (ज) ऋ० १०, २८, २।

तृतीयया चतुर्थ्या च प्रदेवत्रे[क]त्यपां स्तुतिः[१] ॥२३॥
अपां नपा[ख]दित्यनेन नाम्नाग्नि[२]र्मध्यमः स्तुतः।
प्रति य[ग]द्वैश्वदेवन्त[३] त्तस्य प्रे[घ]त्यैन्द्रमुत्तरम्[४] ॥२४॥
वैश्वदेवी प्रमे[ङ]त्येका सं मे[च]त्यैन्द्रो[५]द्वृचः[६] परः॥
कुरु श्रवण[छ]मर्चन्ति[७] परे द्वे[८] त्रासदस्यवम् ॥२५॥
मृते मित्रातिथौ राज्ञि तं नपातमृषिः परैः।
उपमश्रवसं यस्य[ज] चतुर्भिः स व्यशोकयत् ॥२६॥
प्रावेपा[झ] इति सूक्तं यत्तदक्षस्तुति[९]रुच्यते।
अक्षा[१०]चान् द्वादशी स्तौति नवम्याद्या च[११] सप्तमी ॥२७॥

---

(१) प्रदेवत्रेत्यपां स्तुताविति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) नामाग्निरिति क० घ० च०।
(३) त्विति क० ग० घ० च०।
(४) उत्तममिति ख० ङ० पुस्तकान्तरञ्च।
(५) तस्यास्त्वैन्द्रः इति क० घ० च०।
(६) द्व्यृचः इति ग०।
(७) ऋर्चन्तः इति ख० ङ० पुस्तकान्तरञ्च।
(८) पराः षडिति क० घ० च०।
(९) तत्त्वस्येति क० घ० च०।
(१०) तत्रेति ख० ङ०।
(११) चयेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०,३०,१। (ख) ऋ० १०,३०,४। (ग) ऋ० १०,३०,११।
(घ) ऋ० १०,३२,१। (ङ) ऋ० १०,३३,१। (च) ऋ० १०,३३,२।
(छ) ऋ० १०,३३,४। (ज) ऋ० १०,३३,६। (झ) ऋ० १०,३४,१।

पयोदश्मी छपि स्तौति कितवश्चानुशास्ति[१]।
ऋचा[२]स्तु शेषाविन्दन्ति श्रवुभ[क] वैश्वदेवते[३] ॥३८॥
सावित्रमेके मन्यन्ते मह अग्ने[ख] स्तव परम्।
आचार्य्या शौनको यास्को गालवश्चोत्तमामृचम्[४] ॥३९॥
नम[ग] सौर्य्यमैन्द्रमस्मिन्[घ] सौर्य्यं यष्ठ्या तु या स्तुता[५]।
निपातिनी[६]स्ता' सूक्तान्ते वैश्वदेवो[७]ऽत्र तु हृच[८] ॥४०॥
आश्विनानि तु य[ङ]स्तौणि ऐन्द्राण्यस्ते वसु[च] प्र च।
ऐन्द्राणामुत्तमा यास्तु स्तुतोऽर्द्धर्चे[९] वृहस्पति[छ] ॥४१॥
परे दिव पर्य्या[ज]ग्नेये प्रथमस्योत्तमा तु या[१०]।

---

(१) एतच्छ्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न विद्यते।
(२) ऋचाः इति ङ॰।
(३) वैश्वदेवतमिति पाठ साधुः।
(४) एष श्लोकः क॰ ग॰ ध॰ च॰ चिह्नितपुस्तकेषु न पठितः।
(५) यष्ठ्यां तु संस्तुत इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) निपातिन इति ख॰ ङ॰।
(७) सूक्तान्त्यो वैश्वदेव्यः इति क॰ ग॰ घ॰ च॰।
(८) त्र्यृचः इति ग॰।
(९) यास्तु यद्धर्चे लिति क॰ ग॰ घ॰ च॰, याः स्तुततोऽर्द्धर्चे इति ङ॰।
(१०) उत्तमेन त्विति ख॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १०, ३५, १। (ख) ऋ॰ १०, ३६, १२। (ग) ऋ॰ १०,३७,१। (घ) ऋ॰ १०, ३८, १। (ङ) ऋ॰ १०, ३९, १। (च) ऋ॰ १०, ४२, १। (छ) ऋ॰ १०, ४२, ११। १०,४३, ११। १०, ४४, ११। (ज) ऋ॰ १०, ४५, १।

द्यावापृथिव्यौ विश्वे च पञ्चा[1]द्र्चेन संस्तुताः ॥४२॥
आसीत् काक्षीवती घोषा पापरोगेण दुर्भगा ।
उवास षष्टिवर्षाणि पितुरेव गृहे पुरा ॥४३॥
आतस्थे महती चिन्ता न पुत्रौ न पतिर्मम ।
जरां प्राप्ता मुधा तस्मात् प्रपद्येऽहं शुभस्पती ॥४४॥
यथैतौ मामकस्तात आराध्यावाप यौवनम् ।
आयुरारोग्यमैश्वर्य्यं सर्व्वभूतहने विषम्[2] ॥४५॥
रूपवत्ताञ्च सौभाग्यमहं तस्य सुता यदि ।
*ममापि मन्त्राः प्रादुःष्युर्यैः स्तोष्येते मयाश्विनौ* ॥४६॥
चिन्तयन्तीति सूक्तानि त्रीणि घोषा ददर्श सा ।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ॥४७॥
प्रविश्य विजरारोगां सुभगाञ्चक्रतुश्च तौ ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यञ्च सुतं मुनिम्[3] ॥४८॥
ददतुस्तौ सुपर्णाभ्यां यन्नासत्येति[4] कीर्त्तिते ।
काक्षीवत्यै च घोषायै तथा ददतुरोजसा[5] ॥४९॥

---

(१) पञ्चो इति ख० ग० ङ० ।
(२) सर्व्वभूतहते विषमिति ङ० ।
(३) मनोरिति ङ० ।
(४) येनासत्येतीति ख० ।
(५) *न तस्या माच्चुरोमयेति* ख० ङ० पुस्तकान्तरस्थ। आसीत् काक्षीवती घोषेत्यादि सप्त श्लोकाः क० ग० घ० च० चिह्नितपुस्तकेषु न सन्ति ।

प्राजापत्यासुरी त्वासीद्विकुण्ठा नाम नामतः।
सैच्छतीन्द्रसमं पुत्रं तेपेऽथ सुमहत्तपः॥५०॥
सा प्रजापतितः कामान्[१] लेभेऽथ विविधान् वरान्[२]।
तस्याश्चेन्द्रः स्वयं[३] जज्ञे जिघांसुर्दैत्यदानवान्॥५१॥
एकदा[४] दानवैः सार्द्धं समरे समसज्जत।
जघान तेषां नवतीर्नव सप्त च सप्तधा[५]॥५२॥
भित्त्वा[६] स्वबाहुवीर्य्येण हैमरौप्यायसीः[७] पुरीः।
हत्वा सर्व्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्[८]॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्य्येण दर्पितः।
देवान् बाधितुमारेभे मोहितोऽसुरमायया॥५४॥
वध्यमानास्तु तेनापि असुरेणामितौजसा।
उपाधावन्नृषिश्रेष्ठं तत्प्रबोधाय सप्तगुम्[९]॥५५॥

---

(१) काममिति क॰ घ॰ च॰।
(२) सुमहत्तमाः इति क॰ ग॰ घ॰ च॰।
(३) सुतः इति ख॰ छ॰ पुस्तकान्तरश्च।
(४) एकश्चेति क॰ घ॰ च॰।
(५) सप्तकानिति ख॰ छ॰ पुस्तकान्तरञ्च।
(६) जित्वेति ख॰ छ॰ पुस्तकान्तरञ्च।
(७) हैमवत्यायसीरिति क॰ घ॰ च॰।
(८) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम्।
(९) राज्यं प्राप स दैत्येष्वित्यादिश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु नापद्यत।

प्राजापत्यासुरी त्वासीद्विकुण्ठा नाम नामतः ।
सेच्छतीन्द्रसमं पुत्रं तेपेऽथ सुमहत्तपः ॥५०॥
सा प्रजापतितः कामान्[१] लेभेऽथ विविधान् वरान्[२] ।
तस्याश्चेन्द्रः स्वयं[३] जज्ञे जिघांसुर्दैत्यदानवान् ॥५१॥
एकदा[४] दानवैः सार्द्धं समरे समसज्जत ।
जघान तेषां नवतीर्नव सप्त च सप्तधा[५] ॥५२॥
भित्त्वा[६] स्वबाहुवीर्येण हैमरौप्यायसीः[७] पुरीः ।
हत्वा सर्व्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्[८] ॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्य्येण दर्पितः ।
देवान् बाधितुमारेभे मोहितोऽसुरमायया ॥५४॥
बध्यमानास्तु तेनापि असुरेणामितौजसा ।
उपाधावन्नृषिश्रेष्ठं तत्प्रबोधाय सप्तगुम्[९] ॥५५॥

---

(१) काममिति क॰ ग॰ घ॰ ।
(२) सुमहत्तपाः इति क॰ ग॰ घ॰ ङ॰ ।
(३) सुतः इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(४) एकश्चेति क॰ ग॰ घ॰ ।
(५) सप्तकानिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) भित्त्वेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(७) हैमवत्यायसीरिति क॰ ग॰ घ॰ ।
(८) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ चिह्नितपुस्तकेषु न पठितम् ।
(९) राज्यं प्राप स दैत्येष्वित्यादिश्लोकद्वयं क॰ ग॰ घ॰ ङ॰ चिह्नित-पुस्तकेषु नास्ति ।

विष्णुलोकेषु[१] चैश्वर्य्यं प्रभुत्वं भुवनेषु च ॥६१॥
प्र वो मह[क] इति त्वस्यामात्मन्ये[२] वार्पयन् स्वयम्[३]।
वैश्वानरे गृहपतौ यविष्ठेऽग्नौ च पावके ॥६२॥
वषट्कारेण वृक्णेषु अग्नौ च[४] सहसः स्तुतौ[५]।
अपचक्राम देवेभ्यः सौचीकोऽग्नि[६]रिति श्रुतिः ॥६३॥
स प्राविशदपक्रम्य ऋतूनपो वनस्पतीन्।
ततोऽसुराः प्रादुरासन्नष्टेऽग्नौ हव्यवाहने ॥६४॥
तेऽग्निमेवान्वैचन्त देवा हत्वासुरान् युधि।
तन्तु दूराधमश्चैव वरुणश्चान्वपश्यताम् ॥६५॥
उभावेनं समादाय देवानेवाभिजग्मतुः।
दृष्ट्वा देवास्तेनमूचुरग्ने हव्यानि नो वह ॥६६॥
वरं गृहाण मत्तश्च चित्रभानो भजस्व न.[७]।
प्रत्युवाचाथ तानग्निर्विश्वे देवा यदात्थ माम्[८] ॥६७॥
तत्करिष्ये जुषतान्तु होत्रं[९] पञ्च जना मम।

---

(१) मेषु सर्व्वेष्विति क॰ ग॰ घ॰ च॰ ।
(२) आत्मनः इति क॰ ग॰ घ॰ च॰ ।
(३) वीर्य्यमत्यर्यमिति ग॰ ।
(४) स्विति ख॰ पुस्तकान्तरञ्च।
(५) आष्टर्गी सह स्तुताविति ख॰ ग॰, सहसस्तुते इति घ॰ ।
(६) अभिचक्राम सौचिको भयादग्निरिति क॰ ग॰ घ॰ च॰ ।
(७) चेति क॰ घ॰ च॰ ।
(८) वैश्वानराय दातुं मेति क॰ घ॰ च॰, विश्वे मूत यथाक्रमादिति ग॰ ।
(९) होत्रमिति ख॰ ग॰ घ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ १०, ५०, १ ।

मद्दैवत्यानि[१] वै सन्तु यज्ञो मद्देवतोऽस्तु च[२] ।
तवाग्ने यज्ञ [क]इत्येतत् प्रत्यर्द्धि[३] स्विष्टकृच्च सः[४] ॥७३॥
तस्य[५] त्रीणि सहस्राणि नव त्रीणि [ख]शतानि च ।
त्रिंशच्चैव तु देवानां सर्व्वानेव[६] वरान् ददुः ॥७४॥
ततोऽग्निः सुमनाः प्रीतो विश्वैर्देवैः पुरस्कृतः ।
विधूयाङ्गानि यज्ञेषु चक्रे हौत्र[७]मतन्द्रितः ॥७५॥
भ्रातृभिः सहितः प्रीतो दिव्यात्मा हव्यवाहनः ।
तस्यास्थि देवदार्व्वासीन्मेदोमांसञ्च गुग्गुलुः ॥७६॥
सुगन्धि तेजनं स्नायुः[८] शुक्रं रजतकाञ्चने ।
रोमाणि काशाः[९] केशाश्च कुशाः कूर्मा नखानि च ॥७७॥
अन्त्राणि शैवलास्त्वेव मज्जा सिकतशर्कराः[१०] ।

---

(१) मे दैवत्यानीति ख०, मद्दैवत्यान्विति ग०, मद्देवत्यानीति क० घ० च० ।
(२) त्वच इति ग० ।
(३) प्रत्यार्द्धीति ग० ।
(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) यस्येति क० ग० घ० ङ० च० ।
(६) सर्व्वाण्येतानिति ख० ।
(७) होत्रमिति ग० ।
(८) सुश्चिति क० घ० च०, सुगन्धं तजनत् प्राणुरिति ख० ।
(९) कोशाविति क० घ० च० ।
(१०) शिकतशर्करा इति ख०, सिकतशार्करा इति ग० ।

---

(क) ऋ० १०, ५१, ९ । (ख) ऋ० १०, ५२, ६ ।

पुरस्य बन्धुप्रभृतीन् द्वैपादा ये त्रिमण्डले।
दौ किराताकुली[१] नाम ततो मायाविनौ द्विजौ ॥८३॥
असमातिः पुरोऽधत्त वरिष्ठौ तौ हि मन्यते।
तौ कपोतौ द्विजौ भूत्वा गत्वा गौपायनान[२]भि ॥८४॥
मायाबलाच्च योगाच्च सुबन्धुमभिपेततुः।
स दुःखादभिघाताच्च मुमोह च पपात च ॥८५॥
तौ ततोऽस्यासुमालुच्य[३] राजानमभिजग्मतुः।
ततः सुबन्धौ पतिते गतासौ भ्रातरस्त्रयः ॥८६॥
जेपुः स्वस्त्ययनं सर्वे मे[क]ति गौपायनाः[४] सह।
मन[ख]श्चावर्तयन्तोऽस्य[५] सूक्तं य[ग]दिति तेऽभ्ययुः ॥८७॥
जेपुश्च भेषजार्थं यं प्रतारी[घ]ति परन्ततः।
सूक्तस्याद्यस्तृचस्तत्र[६] निर्ऋतेरपनोदनः ॥८८॥

(१) किरातौ कुली इति ग०। कलौ इति क० घ० ङ० च०।
(२) गोपायनानिति घ०।
(३) ध्यानुप्येति ख० ध्यालोच्येति ग० ङ०।
(४) गोपायना इति ख० ग०।
(५) चावर्त्तनं तस्येति ख०।
(६) तच्चेति ख० ग०।

(क) ऋ० १०, ५७, १। (ख) ऋ० १०, ५७, ३। (ग) ऋ० १०,५८, १।
(घ) ऋ० १०, ५९, १।

सूक्तेनाथ स्तुव[१]न्नग्निं द्वैपदेन यथाविधु[२]।
अग्निरित्यब्रवीदेता[३]नयमन्तः परैत्सून्[४] ॥८५॥
सुबन्धुरस्य चैक्ष्वाको[५]मया गुप्तो हितार्थिना।
सुबन्धवे प्रदायासून् [६]जीवेत्युक्त्वा च पावकः ॥८६॥
स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति।
अयं माते[क]ति दृष्टास्ते[७] सुबन्धोरसुमाकयन् ॥८७॥
शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि।
सूक्तशेषं जगुश्चास्य चेतसो धारणाय ते ॥८८॥
लभ्यासुश्चाय[ख]मित्यर्चा पृथक्पाणिभिरस्पृशन्।
यद्विदं[ग] वैश्वदेवानि द्वितीयेऽङ्गिरसां स्तुतिः[८] ॥८९॥
जन्म कर्म च सख्यञ्च[९] इन्द्रेण सह कीर्त्तयन्।

---

(१) सूक्तेनैषां स्तुवन्निति क॰ ग॰ घ॰ च॰।
(२) द्वैपदं यत्तद्विधिविति क॰ घ॰ च॰।
(३) देवानिति ग॰।
(४) परा व्यसुरिति क॰ ग॰ घ॰ ङ॰ च॰।
(५) सुबन्धोरस्य चैक्ष्वाकोरिति क॰ ख॰ घ॰ च॰।
(६) असुमिति ख॰ ग॰।
(७) प्रेमेयेति ख॰।
(८) ऋषिरिति क॰ घ॰ च॰।
(९) सख्याश्चेति क॰ घ॰ च॰।

---

(क) ऋ॰ १०, ६०, ७। (ख) ऋ॰ १०, ६०, १२। (ग) ऋ॰ १, ६१, १।

स्तौति प्रनून[क]मित्याद्याः सावर्ण्यस्य मनोः स्तुतिः ॥१००॥
तस्यैव चायुषोऽर्थाय देवान् स्तौत्यभयादृषिः ।
सुत्रामाणं [ख]महिमूषु[१] दचस्ये[ग]त्यदितेः स्तुतिः ॥१०१॥
पथ्यास्वस्ति स्वस्ति [घ]रद्भिस्वस्तितो मरुतां स्तुतिः ।
मारुतीमृचमन्वाहेत्युक्तमाध्वर्य्यवेषु हि ॥१०२॥
या गौ[ङ]रिति तथैवास्यां स्तूयते मध्यमानुवाक्।
मित्राय मैत्रावरुणी भुज्युमंहस[च] आश्विनी[२] ॥१०३॥
स्तौत्यापि च मनुं स्वस्ति द्वृचे[३] वाचञ्च मध्यमां ।
अथेमां[छ] द्वे बार्हस्पत्ये भद्रा [ज]आग्नेयमाश्रियः[४] ।१०४॥
यज्ज्योतिरमृतं ब्रह्म यद्योगात्समुपाश्नुते ।
तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिः ॥१०५॥
जीवनार्थं प्रयोगस्तु मन्त्राणां प्रतिषिध्यते ।
वेदतत्त्वार्थविज्ञानं प्रायेणाच हि दृश्यते ॥१०६॥

---

(१) महिमूषीति ख० ।
(२) स्तौति प्रनूनमित्याद्या' इत्यादि भुज्युमंहस आश्विनीत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(३) द्वृचे इति ग० ।
(४) अथाग्नेयमथाश्रय· इति क० घ० च०, यद्वा आग्नेयमाप्रियाः इति ख० ।

---

(क) ऋ० १०, ६२, ८ । (ख) ऋ० १०, ६३,१० । (ग) ऋ० १०, ६४, ५ ।
(घ) ऋ० १०, ६३, १५ । (ङ) ऋ० १०, ६५, ६ । (च) ऋ० १०,६५, १२ ।
(छ) ऋ० १०, ६७, १ । (ज) ऋ० १०, ६८, १ ।

आचार्याः केचिदित्याङ्गरच वाग्विदुषां स्तवः।
यथाभिर्निन्द्यते[१] लृग्भिः सूक्तेऽन्याभिरनर्थवित् ॥१०७॥
ये देनामन्वविन्दन्त विद्वांस स्वपितां प्रचीम्[२]।
तया च ह्यभजद्यज्ञे तद्‌चोक्तं[३] तृतीयया ॥१०८॥
प्रशस्यते दृग्मन्यां[४] तु विदानुत्तमया लृचा[५]।
यज्ञे महर्लिंजामाह विनियोगञ्च कर्मणाम् ॥१०९॥
परे तु स्तूयते चोक्ता अष्टौ[क] चैवादितेः[६] सुताः।
धातेन्द्रो वरुणो मित्रः अंशः सूर्योऽर्यमा भगः ॥११०॥
ऐन्द्रेऽजनिष्ठा.[७] सूक्ते द्वे प्रख्रि[ख]त्यच परन्तु यत्।
तच प्राच्यः प्रतीच्यश्च स्रवन्त्यो दक्षिणाश्च वा.[८] ॥१११॥
ताः सप्त सप्तकैर्वर्गैः संस्तूयन्ते प्रधानतः[९]।

---

(१) तथाद्भिं निन्दते इति ख०।
(२) विद्वासर्पिगता सतीमिति ख०, विद्वासर्पिगता सतीमिति ग०।
(३) उक्त इति क० घ० च०।
(४) दश्मन्येति ग०।
(५) ऋचेति ख० ग०।
(६) चास्य क्राष्टौ चादितये इति क० घ० च०।
(७) जनिष्ठा इति क० घ० च०।
(८) दक्षिणाश्चेति ख०, दक्षिणाश्रया इति ग०।
(९) दशकैर्व्यायि संस्तूयन्ते विभक्तय इति ग०।

---

(क) ऋ० १०, ७२, ८। (ख) ऋ० १०, ७५, १।

ग्रावाणामा वो[क] मारुते द्वे अभ्रप्रुष[ख] इति स्तुते ॥११२॥
अपश्य[ग]मिति चाग्नेये य इमा[घ] वैश्वकर्मणे।
मान्यवे यस्त[ङ] इत्येते परं यत्तु मम व्रते ॥११३॥
तदाशीर्वादवत्सूक्तं स्तौति विद्वान् दिवौकसः।
परा[च] कदा स आग्नेयं[१] य[छ]दु[ज]दित्यष्टकं परम् ॥११४॥
मैत्रावरुण्यृक्तत्रास्ति चतुर्थ्यैन्द्राण्युपोत्तमा।
सावित्री चैव सूर्य्या च सैव पत्नी विवस्वतः ॥११५॥
स्तुता वृषाकपायी[झ]ति उषा इति च योच्यते[२]।
उषा ह्येषा[३] त्रिधात्मानं विभज्य प्रैति[४] गोपतिम् ॥११६॥
उषा[५] पुरोदये भूत्वा सूर्य्या मध्यन्दिने स्थिते।
भूत्वा वृषाकपायी च दिनान्तेष्वनुकीर्त्तिता[६] ॥११७॥

---

(१) आग्नेये इति क० ग० घ० च०।
(२) च पूषा इवितयोच्यते इति ख०।
(३) एषेति क० ग० घ० च०।
(४) यत्नेतीति ख०।
(५) उषा० इति क० घ० च०।
(६) वृषाकपायीति दिनान्तेष्वेव गच्छतीति ख०।

---

(क) ऋ० १०, ७६, १। (ख) ऋ० १०, ७७, १। (ग) ऋ० १०, ७९, १।
(घ) ऋ० १०, ८१, १। (ङ) ऋ० १०, ८३, १। (च) ऋ० १०, ८५,२९।
(छ) ऋ० १०, ८५,२४। (ज) ऋ० १०,८५, २१। (झ) ऋ०१०, ८६,१३।

मत्यसूर्यर्त्तुसोमानां सौर्य्याद्यत्र ह्वृगुच्यते ।
पराभिस्तिसृभिस्तृग्भि[१]रुच्यते सोम औषधः[२] ॥११८॥
विसृष्टमुत्तरा त्वासाम्नृक् चन्द्रमसमर्चति ।
सूर्यायै भाववृत्तन्तु रैभी[क]त्यष्टाभिरुच्यते ॥११९॥
य[ख]दश्विनौ तृच[३]स्तौति सूर्य्य[४] एवोत्तरार्चति ।
सप्तदश्यौ वैश्वदेवौ सूर्य्याचन्द्रमसौ परा ॥१२०॥
परस्याः प्रथमौ पादौ सौर्य्यौ चान्द्रमसौ परौ ।
और्णनाभो ह्युचे त्वश्विनावश्विनौ मन्यते स्तुतौ ॥१२१॥
सूर्य्याचन्द्रमसौ तौ हि प्राणापानौ च तौ स्मृतौ ।
अहोरात्रे[५] च तावेव स्यातां तावेव रोदसी ॥१२२॥
अश्नुवाते हि तौ लोकाञ्ज्योतिषा च रसेन च ।
पृथक् पृथक्के चरतु[६] दक्षिणेनोत्तरेण च ॥१२३॥

---

(१) त्वचेति ख० ।
(२) औषधिरिति ग० ।
(३) द्यृच इति ग० ।
(४) सूर्यमिति पाठः साधुः ।
(५) अहोरात्राविति ख० ।
(६) तौ चरतः इति पाठः सङ्गतः । चेरतुरिति ग० ।

---

(क) ऋ० १०, ८५, ६ । (ख) ऋ० १०, ८५, १४ ।

[1]सुकिंशुक[क]मिति त्वयां सूर्य्यामारोहतीं पतिम् ।
स्तौति विश्वावसुश्चैव हृचे[2] गन्धर्व्वमुत्तरे ॥१२४॥
अनृचरा[ख] इत्यनया यौ तौ[3] स्तौतीह दम्पती ।
गृहान् प्रपद्यमानान्तु पराभिः पञ्चभिर्वधूम् ॥१२५॥
वाससश्च बधूनाश्च वरदानं प्रचक्षते ।
ततस्तिभिर्विरागस्य यद्वध्व[ग][4] इति वाससः ॥१२६॥
तद्युक्तया तया स्वर्गो निद्रिते पत्युरेव च ।
ऋगुत्तरा तृतीयस्य विभवे सति वाससः ॥१२७॥
अन्यत्र मैथुनाद्भर्तुर्हरणं प्रतिषिध्यते ।

---

(१) ख० चिह्नितपुस्तके सुकिंशुकमिति श्लोकात् प्राक्,—

सूर्य्यं सरति भूतेषु सुवीरः पतितानि वा ।
सुहृयत्नाधात्येषु सर्व्वकार्य्याणि स वदत् ॥
धाय द्रवति वाचा य स्थावनिन्द्रतुमुच्यते ।
वमेघचे समेतानि निर्म्मितेऽथ चन्द्रमो ॥
इत्यधिकपाठोऽस्ति ।

(२) हृचे इति ग० ।

(३) यात्ये इति ख० ।

(४) यद्वध्वइति वासस इत्यादि ऋगुत्तरा तृतीयस्येत्यन्तपाठ क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ० १०, ८५, २० । (ख) ऋ० १०, ८५, २३ । (ग) ऋ० १०, ८५, ३० ।

ये[क] यज्ञनाग्निनीं स्तौति हृचे[१]मा परिपन्थिनः ॥१२८॥
अष्टमे य[ख]दिति लाह यादृग्वाधूयमर्हति।
आशास्ते[२] चैव विविधं ज्ञातिभ्यश्चानुशासनम्[३] ॥१२९॥
बद्धा स्त्री भाववृत्ति[४]श्च परया तत्र कथ्यते।
पराभिराशीश्चाशास्ते पृथक् ताभ्यः सहैव च। ॥१३०॥
मन्त्रा वैवाहिका ह्येते निगद्यन्ते नृणामपि।
आर्त्विज्या यजमानाश्च यथारूपं विशेषतः ॥१३१॥
प्रत्यृचं प्रतिकीर्त्यन्ते देवताश्चेह यासु याः[५]।

---

(१) हृषे इति ग०।

(२) आशास्तीति क० ग० घ० च०।

(३) स्वानिभिस्चानुवासनमिति ख०।

(४) भावक्षितिरिति क० घ० च०।

(५) ख० चिह्नितपुस्तके, पराभिराशीराशास्ते इत्यादि देवताश्चेह यासु याः इत्यन्तपाठो न विद्यते। तत्र अस्मिन् स्थले,

गृभ्णामि(ग)तद्विवायोद्दक्तागृन्द धनमाशिषः।
आशास्ते परयास्तस्याः संयोगार्थास्तथाशिषः॥
पराभिराशिषः शास्ते पृथक् ताभ्यः सह कश्चित्।
अघोरे(घ)ति हृचे तस्याः स(ङ)मिद्धेति द्वयोर्द्वयोः॥
आना प्रजापतेः प्रेमानश्च(च) यथारूपं विशेषतः।
प्रत्यृचं कीर्त्यते देवता तेषु भाववृत्ततः॥

इति पाठो वर्त्तते।

---

(क) ऋ० १०, ८५,२१। (ख) ऋ० १०,८५,२५। (ग) ऋ० १०, ८५,३६। (घ) ऋ० १०, ८५, ४४। (ङ) ऋ० १०,८५,४६। (च) ऋ० १०, ८५, ४३।

वदेत्तां[१] देवतां तासु नराशंसीर्वदेत वा ॥१२२॥
उषसः सर्व्वया चैता भाववृत्तं प्रचक्षते।
सूर्य्यया सह सूक्तेऽस्मिन् पादश्चैवात्र लक्ष्यते ॥१२३॥
वि हि[क] वार्षाकपं सूक्तमसौ तु[२] कपिलो वृषा।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः[ख] ॥१२४॥
रक्षोहणा[ग]दि चाग्नेयं[३] चैन् सौत्यमीन् परं हवि.[घ]।
इनश्च मध्यमश्चैव अग्नौ वैश्वानरश्च यः ॥१२५॥
इन्द्रं[ङ] पुरुषसूक्त[च]स्य[४] अन्यया पुरुषस्य तु।
यथैनमभजन् साध्या[५] यज्ञार्थे सोऽर्थे[६] उच्यते ॥१२६॥
आपान्तमन्यु[छ]रित्यस्यां[७] स्तुतः सोमस्तु[८] दृश्यते।

(१) वदेतामिति ख॰ ग॰।
(२) हीति ग॰।
(३) वाग्नेयमिति क॰ घ॰ च॰।
(४) तथैन्द्रात्पौरुषं सूक्तमिति ख॰।
(५) साध्येति ख॰।
(६) सार्थं इति ख॰।
(७) इत्येतामिति ख॰।
(८) अत्रेति ख॰ ग॰।

(क) ऋ॰ १०, ८६, १। (ख) ऋ॰ १०, ८६, ५। (ग) ऋ॰ १०, ८७, १।
(घ) ऋ॰ १०, ८८, १। (ङ) ऋ॰ १०, ८९, १०। (च) ऋ॰ १०, ९०, १।
(छ) ऋ॰ १०, ८९, ५।

सालोक्यात्साहचर्य्याद्वा स्तूयते सोम एव वा ॥१ ३ ७॥
निपातभाजं सोमञ्च श्रद्धां रथीतरोऽब्रवीत्।
ऐन्द्रो ह्येष निपातस्तु[१] स्तुतोऽग्निरुरुणेन[२]सः ॥१ ३ ८॥
यज्ञस्य वो[क] वैश्वदेवे प्रैत[ख] इत्युत्तरन्तु यत्।
तत्रार्ब्बुदस्तु ग्रावाणं मूर्त्तिमन्तमिवार्चति ॥१ ३ ९॥
पुरूरवसि राजर्षावप्सरास्तूर्व्वशी पुरा।
न्यवसत् संविदङ्कृत्वा तस्मिन् धर्मञ्चचार च ॥१ ४ ०॥
तया तस्य च संवास[३]मसूयन् पाकशासनः।
पैतामहञ्चानुरागमिन्द्रवच्चापि[४] तस्य तु ॥१ ४ १॥
स तयोस्तु वियोगार्थं[५] पार्श्वस्थं वज्रमब्रवीत्।
प्रीतिम्भिन्ध्यनयो[६]र्वज्र मम चेदिच्छसि प्रियम् ॥१ ४ २॥
तथेत्युक्ता तयोः प्रीतिं वज्रो भिदति[७] मायया।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृपः ॥१ ४ ३॥

---

(१) ऐन्द्रेषु हि निपातोऽत्रेति-क॰ ग॰ घ॰ च॰।
(२) वरुणेन स इति ख॰।
(३) संवादमिति क॰ घ॰ च॰।
(४) चानुरागंत्विन्द्रवर्चा पीति क॰ ख॰ घ॰ च॰।
(५) विभागार्थमिति क॰ घ॰ च॰।
(६) प्रीतिम्भिद तयोरिति ग॰।
(७) भिनत्तीति साधु।

---

(क) ऋ॰ १०, ९२, १। (ख) ऋ॰ १०, ९४, १।

चरन् सरसि सोऽपश्यदभिरूपामिवोर्वशीम् ।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम्[१] ॥१४४॥
तामाह पुनरेहीति नेति सा लब्रवीन्नृपम् ।
तामुपाक्रयत प्रीत्या दुःखात्ता लब्रवीन्नृपम् ॥१४५॥
अप्राप्याहं त्वयाद्येह स्वर्गे प्राप्स्यसि मां पुनः ।
आक्रान्तं प्रति चाख्यान[२]मितरेतरयोरिदम् ॥१४६॥
संवादं मन्यते यास्क इतिहासन्तु शौनकः ।
हय[क] इति परमेन्द्रं प्रते[ख]या [ग]ओषधीस्तवः ॥१४७॥
आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः[३] ।
भ्रातरौ[४] कुरुषु ख्यातौ राजपुत्रौ बभूवतुः ॥१४८॥
ज्येष्ठस्तयोस्तु देवापिः कनीयांश्चैव शन्तनुः ।
त्वग्दोषी राजपुत्रस्तु[५] ऋष्टिषेणसुतो[६]ऽभवत् ॥१४९॥

---

(१) वृता चलस्त्वमि खव इति ख० ।
(२) च्याख्यानमिति क० ग० घ० च० ।
(३) कनीयांश्चैव शन्तनुरिति ख० ।
(४) भारताविति क० ग० घ० च० ।
(५) त्वग्दोषिणी राजपुत्र इति क० घ० च० ।
(६) च्यार्ष्टिषेणसुत इति ग० ।

---

(क) ऋ० १०, ९५, १ । (ख) ऋ० १०, ९६, १ । (ग) ऋ० १०, ९७, १ ।

सालोक्यात्साहचर्याद्वा स्तूयते सोम एव वा ॥१२७॥
निपातभाजं सोमञ्च ऋच्यां रथीतरोऽब्रवीत्।
ऐन्द्री ह्येष निपातस्तु(१) स्तुतोऽग्निररुणेन(२)सः ॥१२८॥
यज्ञस्य वो(क) वैश्वदेवे प्रेत(ख) इत्युत्तरन्तु यत्।
तत्रार्बुदस्तु ग्रावाणं मूर्त्तिमन्तमिवार्चति ॥१२९॥
पुरूरवसि राजर्षावप्सरास्तूर्वशी पुरा।
न्यवसत् संविदङ्कृत्वा तस्मिन् धर्मञ्चचार च ॥१४०॥
तया तस्य च संवास(३)मसूयन् पाकशासनः।
पैतामहस्यानुरागमिन्द्रवच्चापि(४) तस्य तु ॥१४१॥
स तयोस्तु वियोगार्थे(५) पार्श्वस्थं वज्रमब्रवीत्।
प्रीतिश्छिन्ध्यनयो(६)र्वज्र मम चेदिच्छसि प्रियम् ॥१४२॥
तथेत्युक्त्वा तयोः प्रीतिं वज्रो भिद्दति(७) मायया।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृपः ॥१४३॥

---

(१) ऐन्द्रेषु हि निपातोऽत्रेति-क० ग० घ० च०।
(२) वरुणेन सः इति ख०।
(३) संवादमिति क० घ० च०।
(४) चानुरागमिन्द्रवर्चापीति क० ख० घ० च०।
(५) विभागार्थमिति क० घ० च०।
(६) प्रीतिभिन्द तयोरिति ग०।
(७) भिनत्तीति साधु।

---

(क) ऋ० १०, ८२, १। (ख) ऋ० १०, ८४, १।

चरन् सरसि सोऽपश्यदभिरूपामिवोर्व्वशीम्।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम्[1] ॥१४४॥
तामाह पुनरेहीति नेति सा त्वब्रवीत्नृपम्।
तामुपाक्रयत प्रीत्या दुःखात्सा त्वब्रवीत्नृपम् ॥१४५॥
अप्राप्याहं त्वयाद्येह स्वर्गे प्राप्स्यसि मां पुनः।
आख्यानं प्रति चाख्यान[2]मितरेतरयोरिदम् ॥१४६॥
संवादं मन्यते यास्क इतिहासन्तु शौनकः।
हय[क] इति परमेन्द्रं प्रते[ख]या [ग]ओषधीस्तवः ॥१४७॥
आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः[3]।
भ्रातरौ[4] कुरुषु त्वेतौ राजपुत्रौ बभूवतुः ॥१४८॥
ज्येष्ठस्तयोस्तु देवापिः कनीयांश्चैव शन्तनुः।
त्वग्दोषी राजपुत्रस्तु[5] ऋष्टिषेणसुतो[6]ऽभवत् ॥१४९॥

---

(१) वृता चतसृभिः सतः इति ख०।
(२) चाख्यातमिति क० ग० घ० च०।
(३) कनीयांश्चैव शन्तनुरिति ख०।
(४) भारताविति क० ग० घ० च०।
(५) त्वग्दोषिणौ राजपुत्रः इति क० घ० च०।
(६) चार्ष्टिषेणसुतः इति ग०।

---

(क) ऋ० १०, ६५, १। (ख) ऋ० १०, ६६, १। (ग) ऋ० १०, ६७, १।

राज्येन च्छन्दयामासुः[१] प्रजाः स्वर्गं गते गुरौ।
स मुहूर्त्तमिव ध्यात्वा प्रजास्ताः प्रत्यभाषत ॥१५०॥

इति बृहद्देवतायां सप्तमोऽध्यायः।

---

(१) छन्दयेयुस्तम् राज्यमिति ब॰ ग॰ घ॰।

## अथाष्टमोऽध्यायः ।

न राज्यमहमर्हामि नृपतिर्वोऽस्तु शन्तनुः ।
तथेत्युक्ताभ्यषिञ्चंस्ताः प्रजा राज्याय शन्तनुम् ॥१॥
ततोऽभिषिक्ते कौरव्ये वनं देवापिराविशत् ।
न ववर्षाथ पर्जन्यस्तस्मिन्राष्ट्रे शतं समाः ॥२॥
ततोऽभ्यगच्छद्देवापिं प्रजाभिः सह शन्तनुः ।
प्रसादयामास चैनं तस्मिन् धर्म्मव्यतिक्रमे ॥३॥
शिशिक्ष[1] चैनं राज्येन[2] प्रजाभिः सहितस्तदा ।
तमुवाचाथ देवापिः प्रह्वं प्राञ्जलिमंस्थितम्[3] ॥४॥
न राज्यमहमर्हामि त्वग्दोषोपहतेन्द्रियः ।
याजयिष्यामि ते राजन् वृष्टिकामेष्ट्यया स्वयम् ॥५॥
ततस्तन्तु पुरोऽधत्त आर्त्विज्याय स शन्तनुः ।
स चास्य चक्रे कर्माणि[4] वार्षिकाणि यथाविधि ॥६॥

(१) सिषेचेति पाठः समीचीनः ।
(२) राज्ये त्विति पाठः साधीयान् । चैव राज्यस्येति क० ख० ग० ।
(३) प्रवस्तु प्राञ्जलि स्थितः इति क० ख० च०, प्रह्वन्तु प्राञ्जलिस्थित-मिति ग०, प्रवयं प्राञ्जलिस्थितमिति पुस्तकान्तरम् ।
(४) चकार सोऽस्य कर्म्माणीति ख० ।

बृहस्पते प्रती[क]त्यृग्भिरीळे चैवं[1] 'बृहस्पतिम्।
द्वितीययास्य सूक्तस्य बोधिते जातवेदसा ॥७॥
आस्ये ते द्युमति[2] वाचं दधामि स्तुहि देवताः[3]।
इति[4] सोऽस्मै ददौ प्रीतो वाचं देवीं[5] तया च सः ॥८॥
अभिष्टुतस्तृभिर्देवान् जगौ दृष्ट्यर्थमेव तु।
अग्निश्च सूक्तशेषेण क[ख]मैन्द्रं सूक्तमुत्तरम् ॥९॥
इन्द्रद्युम्ने[ग]ति विश्वेषामु[घ]दित्यृत्विक्स्तुतिः परम्।
शक्तिप्रकाशने तेषां[6] विनियोगोऽत्र कीर्त्यते ॥१०॥
प्रे[ङ]तीतिहाससूक्तन्तु[7] मन्यते शाकटायनः।

---

(१) प्रतीत्येतदीळे चैवेति क॰ घ॰ च॰।
(२) चस्येति द्विसविरिति ख॰।
(३) द्वितीययास्य सूक्तस्येत्यादि दधामि स्तुहि देवताः इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापद्यत।
(४) ततः इति क॰ ग॰ घ॰ च॰।
(५) वाचन्देवीमिति क॰ ग॰ घ॰ च॰।
(६) शक्तिप्रकाशने नैषामिति क॰ ख॰ ग॰ घ॰ च॰।
(७) इतिहासं प्रेति सूक्तमिति ख॰, सेतिहासं प्रेति सूक्तमिति पुस्तका-न्तरम्।

---

(क) ऋ॰ १०, ९८, १। (ख) ऋ॰ १०, ९९, १। (ग) ऋ॰ १०, १००, १। (घ) ऋ॰ १०, १०१, १। (ङ) ऋ॰ १०, १०२, १।

यास्केन्द्रौ चन(१)मैन्द्रं वा वैश्वदेवन्तु शौनकः ॥११॥
आजावनेन(२) भार्म्याश्व(३) इन्द्रासोमौ तु मुद्गलः ।
अजयद्वृषभं(४) युक्त्वा ऐन्द्रञ्च द्रुघणं रथे ॥१२॥
युध्यन् संख्ये जयं प्रेप्सुरैन्द्रो(५) प्रतिरथं जगौ(६) ।
आशु(क)रैन्द्रमथादेवी अमीषा(ख)मित्यृचि स्तुता ॥१३॥
चतुर्थी बार्हस्पत्या स्यादावल्ग(ग) प्रसह्यामिति(७) ।
द्व्यृचे च(८) मरुतः प्रे(घ)ति अर्व्वेति परमन्तु यत् ॥१४॥
तथानिरुक्तसूक्तादावृगेका सूर्य्यमर्चति ।
घर्मपरा(९)स्ततस्तस्तु सवितारमभी(ङ)ति या ॥१५॥
सूक्तशेषस्य षडृचः सूर्य्याचन्द्रमसौ मच ।

(१) मध्यमिति ख०, मद्यमिति घ० च० ।
(२) आजावने त्विति ख०, आजीवनन्त्विति पुस्तकान्तरम् ।
(३) भार्म्याश्च इति ख० गार्ग्यश्चेति पुस्तकान्तरम् ।
(४) वृषभमिति क० ख० घ० ।
(५) इन्द्रः इति पाठः सङ्गतः ।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(८) द्व्यृचस्त्विति ख०, द्व्यृचे त्विति ग० ।
(९) धर्म्मपरा इति ख० ग० ।

(क) ऋ० १०, १०३, १ । (ख) ऋ० १०, १०३, १२ । (ग) ऋ० १०, १०३, ५ ।
(घ) ऋ० १०, १०३, १३ । (ङ) ऋ० १०, १०३, ७ ।

तुष्टावेन्द्रमसावी(क)ति अष्टकोऽस्मात् परेण(१) तु ॥१६॥
कौत्सः कदा वसोः (ख)सूक्तं दुर्मित्रो नाम नामतः।
सुमित्र इति नामाख्य(२) गुणार्थमितरं पदम् ॥१७॥
भर्तारस्तु प्रजाकामः कर्माणि कृतवान् पुरा।
न हि लेभे प्रजाः काश्चित्काश्यपो मुनिसत्तमः ॥१८॥
उवाच भार्य्या भर्तारं सुतानिच्छामि यावतः।
तावतो जनयिष्यामि देवता द्वन्द्वशस्तु हि ॥१९॥
तमभ्ययुस्तु सर्व्वाणि द्वन्द्वानि स्तुतिकाम्यया।
तान्यवेक्षाय तस्थर्क्षे(३) नासत्यौ सूक्तभागिनौ ॥२०॥
तदेतद्व्यन्ततो भावादाश्विनं सूक्तमुच्यते।
न ह्यस्मिन्देवतालिङ्गं प्रायेणाश्व हि दृश्यते ॥२१॥
सूक्तेन तु परेणात्र स्वयमाविर(ग)भूदिति।
आत्मानमेव तुष्टाव प्राजापत्याथ(४) दक्षिणा(घ) ॥२२॥
दात्वनत्र सुतानेके दक्षिणानां वदन्ति तु।
दातृलाद्दक्षिणानाञ्च भोजाश्चतसृभिः स्तुताः ॥२३॥

---

(१) अष्टक. परमेष्ठेति क० घ० ङ०।
(२) सुमित्रश्चैव नाम स्यादिति क० घ० ङ०।
(३) तस्थर्क्षे इति ख०।
(४) अर्थेति ख०।

---

(क) ऋ० १०, १०४, १। (ख) ऋ० १०, १०५, १। (ग) ऋ० १०, १०७, १।
(घ) ऋ० १०, १०७, ५।

असुराः पणयो नाम रसापारनिवासिनः[1]।
गास्तेऽपजह्रुरिन्द्रस्य न्यगूहंश्च[2] प्रयत्नतः ॥२४॥
बृहस्पतिस्तथापश्यद्दृष्ट्वेन्द्राय शशंस च।
प्राहिणोत्तत्र दूतीं तु[3] सरमां पाकशासनः ॥२५॥
कि(क)मित्यत्रागुजाभिस्तां पप्रच्छुः पणयोऽसुराः।
कुतः कस्यासि कल्याणि किं वा कार्यमिहास्ति ते ॥२६॥
अथाब्रवीत्तां सरमा दूत्यैन्द्री विचराम्यहम्।
युष्मान् व्रजायान्विच्छन्ती[4] ऐन्द्रीर्गाश्चैव पृच्छति ॥२७॥
विदित्वेन्द्रस्य दूतीं तामसुराः पापचेतसः।
ऊचुर्मा सरमे गास्त्वमिहास्माकं स्वसा भव ॥२८॥
सूक्तस्य चान्यया चर्चा[5] युष्माभिस्त्वेव सर्वशः।
साब्रवीन्नाह(ख)मिच्छामि स्वसृत्वं वा धनानि वा ॥२९॥
पिबेयं[6] तु पयस्तासां गवां यास्ता निगूहथ।
असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ॥३०॥

(१) सिन्धुपारनिवासिन इति ख०।
(२) निगूढस्येति क० घ० च०।
(३) दूत्येऽयेति ख० ग०।
(४) विधूय व सर्वा इति क० घ० च०।
(५) सूक्तस्यान्तपदर्च्येति क० घ० च०।
(६) पिबामीति क० घ० च०।

(क) ऋ० १०, १०८, १। (ख) ऋ० १०, १०८, १०।

सा स्वभावाच्च लौल्याच्च पीत्वा तत्[१] पय आसुरम्।
वरं[२] संवननं दृष्टं बलपुष्टिकरं ततः ॥ २१ ॥
शतयोजनविस्तारामतरत्तां रसां पुनः।
यस्याः पारेऽपरे तेषां पुरमासीच्च दुर्ज्जयम् ॥२२॥
पप्रच्छेन्द्रस्य सरमां कच्चिद्गा दृष्टवत्यसि।
सा नेति प्रत्युवाचेन्द्रं प्रभावादासुरस्य हि[३] ॥२३॥
तां जघान तदा क्रुद्ध उद्गिरन्तीं पयस्ततः।
जगाम सा भयोद्विग्ना पुनरेव पणीन् प्रति ॥२४॥
पदस्तस्य पद्धत्या रथेन हरिवाहनः।
गत्वा जघान च पणीन् गाश्च ताः पुनराहरत् ॥२५॥
तेऽवदन्[क] वैश्वदेवन्तु जामदग्न्यस्तथाप्रियः[४]।

---

(१) चेति क॰ घ॰ च॰।

(२) पयः इति ग॰।

(३) त्विति क॰ ग॰ घ॰ च॰।

(४) ख॰ चिह्नितपुस्तके एतच्छ्लोकार्द्धं न विद्यते। तत्र अस्मिन् स्थले,
ते च तं वैश्वदेवं स्यात् मद्यच्छाया जुहुर्जगौ ॥
जामदग्निसमिद्धाख्यौ प्रियस्तत्तामतः परं।
प्रजन्त युगपत् सर्व्वे वैरूपाख्यं त्रिभिः परैः।
इति पाठो वर्त्तते।

---

(क) ऋ॰ १॰, १॰८, १।

युगपद्वै भजन्तं तं[१] वैरूपा ऋग्नयस्त्रयः ॥२६॥
इन्द्रं प्रति जगुः सूक्तैः पणीन् प्रतिजिगीषिणम्[२] ।
वैश्वदेवं परं सूक्तं घर्म्म[क]त्येकेन तु स्तुतान् ॥२७॥
देवानिन्द्रं च मन्यन्ते छन्दांस्यग्निं[३] च मध्यमम् ।
आग्नेयं चित्र[ख] इत्येतज्जगादर्षिरुपस्तुतः ॥२८॥
पिबे[ग]न्द्रं स्तौति ने[घ]त्यत्र रक्षोघ्नाग्नेयमुत्तरम्[४] ।
इति वै[ङ] तावदैन्द्रं त[च]दाख्याः षष्ठ्यां निपातिताः[५] ॥३९॥
प्राजापत्यमथाग्नेयं वैन्यमित्यनुपूर्व्वशः ।
वरुणेन्द्राग्निसोमाना[६] मिमं न[छ] इति संस्तुतिः[७] ॥४०॥
चतस्रस्त्वत्र सूक्तादावग्निरात्मस्तवं जगौ ।
स्तुतः सोमस्तु षष्ठ्या च नवम्या[८]श्च पदैस्त्रिभिः ॥४१॥

---

(१) व्रतं तन्विति क॰ ग॰ घ॰ ।
(२) प्रतिमनीषिणः इति ख॰ ।
(३) छन्दांस्यग्निमिति ख॰ ।
(४) आग्नेयन्तु परं ततः इति क॰ ग॰ च॰ ।
(५) मध्याश्च संस्तुतः इति ख॰ ।
(६) सोमाग्निवरुणानामिन्द्रवित् क॰ ग॰ घ॰ ।
(७) संस्तवः इति ख॰ ग॰ ।
(८) नवम्यामिति ख॰, नवम्येति ग॰ ।

---

(क) ऋ॰ १०, ११४, १ । (ख) ऋ॰ १०, ११५, १ । (ग) ऋ॰ १०, ११६, १ । (घ) ऋ॰ १०, ११७, १ । (ङ) ऋ॰ १०, ११९, १ । (च) ऋ॰ १०, १२०, १ । (छ) ऋ॰ १०, १२४, १ ।

वारुण्यस्त्वितरास्तिस्र[1] इन्द्र[क]मेवोत्तमं पदम्[2] ।
अहं[ख] वाक्सूक्तमर्य्यम्णो मित्रस्य वरुणस्य च ॥ ४२ ॥
न तं[ग] राज्ञ्याः परं सूक्तं वैश्वदेवं ममे[घ]ति यत् ।
नमस्ते वैद्युतं सूक्तं त्वाशीर्वादः परन्तु तत्[3] ॥ ४३ ॥
याङ्कल्पयन्ति नोऽरयः कृत्या[4] नाशनमात्मनः[5] ।
हिरण्यस्तुतिरायुष्यं नाम[ङ]स्य[6]त्परमेष्ठिनः ॥ ४४ ॥
वदन्ति भाववृत्तं तद्यो यज्ञ[च] इति चोत्तरम्[7] ।
अपे[छ]न्द्रमत्र त्वाश्विन्यौ चतुर्थी पञ्चमी स्तुते[8] ॥ ४५ ॥
मैत्रावरुणमोजात्नं[ज] प्रथमायामृचि स्तुता[9] ।
अर्धर्चे द्यौश्च भूमि[10]श्च आश्विना चोत्तरे ततः[11] ॥ ४६ ॥

(१) स्तत्रेति ग० ।
(२) उत्तमो जगाविति ग० ।
(३) यदिति ख० ।
(४) कृत्यामिति ग० ।
(५) नतिं कृत्वा दैवतमुच्यते इति ख० ।
(६) नेति यदिति क० घ० च० ।
(७) उत्तरन्तस्य चैव वदिति क० घ० च० ।
(८) च येति ख० ।
(९) स्तुताः इति ख० ग० ।
(१०) पूषेति ख० ।
(११) चाश्विनौ चोत्तरे ततः इति क० ग० घ० च०, उत्तरेऽक्षिति ख० ।

(क) ऋ० १०, १२४, ९ । (ख) ऋ० १०, १२५, १ । (ग) ऋ० १०, १२६, १ । (घ) ऋ० १०, १२८, १ । (ङ) ऋ० १०, १२९, १ । (च) ऋ० १०, १३०, १ । (छ) ऋ० १०, १३१, १ । (ज) ऋ० १०, १३२, १ ।

मोखै(क)न्द्रं वैश्वदेव्यृक् तु नकिर्देवा मिनीमसि(ख) ।
यस्मिन् तृच (ग)इति तस्मिन् द्युस्थाने स्तूयते यमः ॥४७॥
केश्यग्निं (घ)केशिनः सूक्तं द्युत देवाः (ङ)परन्तु यत् ।
देवानामच वाद्या स्यादायव्यस्तृच उत्तरः(१) ॥४८॥
चायन्तां (च)वैश्वदेव्यृक् तु प्रेपस्त्वब्देवतः परः(२) ।
स्यादि त(३)द्विश्वभैषज्यं रपसो वा विनाशनम्(४) ॥४९॥
भूमिलांचा परं सूक्तं तवै(छ)न्द्रं सूक्तमुत्तरम् ।
सूर्य्यरश्मि(ज)रिति तस्मिन् सावित्रः प्रथमस्तृचः ॥५०॥
आत्मा स्तुतः परोक्ष(५)स्तु गन्धर्व्वेणोत्तरे तृचे ।
इन्द्रो वैव(६)निपातेन अथ वा सूर्य्य उच्यते ॥५१॥
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः ।
आग्नेयं तग्ने(झ) तवे तु अग्ने अच्छे(ञ)ति यत्परम्(७) ॥५२॥

(१) ऋगाद्या तत्र देवानां वाते देवस्तृचः परः इति ख० ।
(२) रुतः ख० ।
(३) स्यादेतदिति ग० ।
(४) रपसस्यापनोदनमिति ख० ।
(५) परोक्षमिति ख० ।
(६) चैवेति ख० ।
(७) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

(क) ऋ० १०, १२३, १ । (ख) ऋ० १०,१३४,७ । (ग) ऋ० १०,१३५,१ ।
(घ) ऋ० १०,१३६,१ । (ङ) ऋ० १०, १३७,१ । (च) ऋ० १०,१३७,५ ।
(छ) ऋ० १०, १३८, १ । (ज) ऋ० १०, १३९,१ । (झ) ऋ० १०,१४०, १ ।
(ञ) ऋ० १०, १४१, १ ।

आग्नेयं वैश्वदेवञ्च अय[क]मित्यत्र तु तृचाः[१]।
शार्ङ्गास्तत्र ऋषयो अग्निमार्चन् पृथक् पृथक् ॥५३॥
आश्विनं त्यञ्चि[ख]दित्येतदय[ग]मैन्द्रं ततः परम्।
इमां खनामी[घ]ति सूक्तमिन्द्राणी यत्स्वयं जगौ ॥५४॥
तद्धौपनिषदं सूक्तं भाववृत्तं प्रचक्षते।
[२]अरण्यानी[ङ]त्यरण्यान्याः स्तुतिरैन्द्रे तदुत्तरे ॥५५॥
सावित्रं सविता यन्त्रैः[च] समिद्धुग्नित् समिध्यसे[छ]।
आग्नेयं श्रद्धया[ज] श्राद्धं मेधासूक्तमतः परम् ॥५६॥
आग्नेयमासुरित्यस्मात्प्रास[झ] ऐन्द्रे ततः परे।
सोम एकेभ्य[ञ] इत्येतद्भाववृत्तं प्रचक्षते[३] ॥५७॥

---

(१) तृचाः इति ग०।
(२) ख० चिह्नितपुस्तके अरण्यानीति श्लोकात् प्राक्, उत्तानपर्णां पाठान्तु स्तौति सूक्ते मद्दौषधिम्। पतिसंवननीं त्वं पाप्मनः सप-त्नापनोदिकाम्। इत्यधिकं पठितम्।
(३) वदन्ति त्विति ख०।

---

(क) ऋ० १०, १४२, १। (ख) ऋ० १०, १४३,१। (ग) ऋ० १०,१४४,१।
(घ) ऋ० १०, १४५, १। (ङ) ऋ० १०,१४६ १। (च) ऋ० १०,१४९,१।
(छ) ऋ० १०, १५०, १। (ज) ऋ० १०,१५१,१। (झ) ऋ० १०,१५२,१।
(ञ) ऋ० १०, १५४, १।

शौनको वैश्वदेवन्तु मन्यते शाकटायनः।
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः[१] ॥५८॥
यद्रायी[क]त्यलक्ष्मीघ्नं तच चक्षो[ख] इति तृचे।
प्राधान्याद्वा निपाताद्वा स्तूयते ब्रह्मणस्पतिः ॥५९॥
इन्द्रस्यैव य[ग]दित्यस्यां विश्वेदेवाः परौ[घ] तृचि।
आग्नेयं चाग्नि[२][ङ]मित्येतद्वैश्वदेवमिमा नु कम्[च] ॥६०॥
इन्द्रः प्राधान्यतस्तत्र[३] विश्वैर्देवैः सह स्तुतः।
आदित्यैश्च मरुद्भिश्च तथारूपं हि दृश्यते ॥६१॥
सूर्या न[छ] इति सौर्य्यन्तु यत्त्वेतदुद्गा[ज]विति।
पौलोमी स्वान् गुणांस्तत्र सपत्नीनां प्रशंसति ॥६२॥
ऐन्द्रं[४] तीव्रस्य[झ] मुञ्चामि[ञ] भेषज्यं यक्ष्मनाशनम्।
राजयक्ष्महनं सूक्तं प्राजापत्यं तदुच्यते ॥६३॥
ऐन्द्राग्नं मन्यते यास्क एके लिङ्गोक्तदैवतम्।

---

(१) शौनको वैश्वदेवन्त्वित्यादि एता एव प्रकीर्त्तिता इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(२) स्वग्निमिति ख०।

(३) प्रधानतो वाग्नेति ख०।

(४) इन्द्रमिति ख०।

---

(क) ऋ० १०, १५५, १। (ख) ऋ० १०,१५५,२। (ग) ऋ० १०,१५५,४।
(घ) ऋ० १०, १५५, ५। (ङ) ऋ० १०,१५६,१। (च) ऋ० १०,१५७,१।
(छ) ऋ० १, १५८, १। (ज) ऋ० १०,१५९, १। (झ) ऋ० १०, १६०, १।
(ञ) ऋ० १०, १६१, १।

गर्भसंस्रवसंयुक्तं[१] यस्तेतद्ब्रह्मणे[क]ति तु ॥६४॥
स्रवतामपि गर्भाणां दृष्टन्तदनुमन्त्रणम्।
वैन्यन्तु वेनस्तत्पश्य[२] दचीभ्यां[ख] यक्ष्मनाशनम् ॥६५॥
दुःस्वप्नघ्नमपेहीऽ[ग]ति निपातीन्द्रोऽग्निरेव तु।
आसीदृषि[३]र्दीर्घतपाः[४] कपोतो नाम नैर्ऋतः ॥६६॥
चक्रे[५]कपोतस्तस्याग्न्यामग्निधाने पदङ्कित।
स त[६]मात्मच्चित्तैर्वाक्यैः कपोतं स्तुतवानृषिः[७] ॥६७॥
देवा [घ]इति तु सूक्तेन प्रायश्चित्तार्थमुच्यते।
ऋषभं मा[ङ] सपत्नघ्नं येनेदमिति मानवम् ॥६८॥
तुभ्ये[च]त्यृषी ददृशतुरैन्द्रं गाथिनभार्गवौ।
वरुणो विधातानुमतिर्धाता सोमो बृहस्पतिः ॥६९॥
षडेता देवतास्त्वत्र तृतीयायामृचि स्तुताः।
वातस्ये[छ]ति परेणास्तौदनिलं पितरं स्वकम् ॥७०॥

---

(१) रक्षोघ्नाग्नेयमित्युक्तमिति ख० ग०।
(२) अपश्यदित्यर्थे पश्यदित्यार्षः। भावहत्तं परस्वैवमिति ख०।
(३) आशीविषः इति ख०।
(४) दीप्ततपाः इति क० घ० च०।
(५) अकरोदिति क० घ० च०।
(६) प्रतमिति ख०, स्तुतमिति ग०।
(७) कपोतो नैर्ऋतस्तदेति क० ग० घ० च०।

---

(क) ऋ० १०, १६२, १। (ख) ऋ० १०,१६३,१। (ग) ऋ० १०,१६४,१।
(घ) ऋ० १०, १६५, १। (ङ) ऋ० १०,१६६, १। (च) ऋ० १०,१६७,१।
(छ) ऋ० १०, १६८, १।

मयो भू(क)रिति यत्सूक्तमपश्यच्छ्वर(१) ऋषिः ।
नानारूपाः पयस्विन्यो गावस्तत्र तु संस्तुताः ॥७१॥
विभ्राट्(ख) सौर्यंन्त्वन्य(ग)मैन्द्रन्त्वायाही(घ)त्युषसः स्तुतिः ।
आ त्वा(ङ)राज्ञेऽभिपित्ताय(२)द्वे सूक्ते चानुमन्त्रणे ॥७२॥
प्रव (च)इत्युत्तरं ग्रावणं ददर्श स्तुतिमार्ब्बुदिः(३) ।
यलतः(४) परमाग्नेयं तत्रार्भव्यृक् प्रस्नवः(छ) ॥७३॥
ऋषिर्जगौ पतङ्गस्तु पतङ्ग(ज)मिति यत्परम् ।
तत्सौर्य्यमेके मन्यन्ते मायाभेदं तथापरे ॥७४॥
मायाभेदे द्वितीयायां वाक् स्तुतेत्याह शौनकः ।
देवी विभ्रमति मनसापा वाचा विदितां सती(५) ॥७५॥
त्यमू षि(झ)ति तु सौपर्ण(६) सूक्तं स्वस्त्ययनं विदुः ।
उ(ञ)दैन्द्रं वैश्वदेवन्तु मथस्वे(ट)ति च यत्परम् ॥७६॥

---

(१) शुभरः इति क० घ० च० ।

(२) अभिविक्तस्येति ख० ।

(३) आर्ब्बुदः इति ख० ।

(४) यलत इति क० घ० च० ।

(५) मायाभदे द्वितीयायामित्यादि पा वाचा विदितां सतीत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(६) तार्क्ष्यैवत्यमिति ख० ।

---

(क) ऋ० १०, १६९, १। (ख) ऋ० १०,१७०,१ । (ग) ऋ० १०, १७१,१ ।
(घ) ऋ० १०, १७२, १ । (ङ) ऋ० १०,१७३, १ । (च) ऋ० १०,१७५,१ ।
(छ) ऋ० १०, १७६, १ । (ज) ऋ० १०,१७७,१ । (झ) ऋ० १०,१७८,१ ।
(ञ) ऋ० १०, १७९, १ । (ट) । ऋ० १०, १८१, १ ।

आत्मप्रभावमाचख्युस्ताद्या ऋषयस्त्रयः ।
रथन्तरं यथा स्तोत्रं स्तोचञ्चैव यथा बृहत् ॥७७॥
यथा च सम्भृतो धर्म्मः सवितुश्चोपलच्यते[१] ।
बृहस्पति[क]रिति तस्मिन् स्तुतः सूक्ते बृहस्पतिः ॥७८॥
आशिषो यजमानस्य केचिदेतां स्तुतिं विदुः[२] ।
प्राजापत्यस्य यत् सूक्तमपश्यं ता[ख]प्रजावतः ॥७९॥
प्रत्यृचं देवता स्तौति लिङ्गैरेवाच देवताः[३] ।
आशिषः पुचकामस्य प्रथमा ह्रि वदत्यथ ॥८०॥
द्वितीया पुचकामायास्तृतीयात्मस्तव[४]स्तृपेः ।
यद्विष्णु[ग]रिति सूक्तन्तु वैश्वदेवं प्रचक्षते ॥८१॥
तस्मिन् स्वदारगर्भार्थमृषिराशास्त आशिषः ।

---

(१) वादश्चैवात्र दृश्यते इति क० घ० च० ।

(२) बृहस्पतिरिति तस्मिन्नित्यादि केचिदेतां स्तुतिं विदुरित्यन्तपाठः ख० चिह्नितपुस्तके न विद्यते। तत्र यस्मिन् स्थले, सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः इति श्लोकार्द्धं वर्त्तते ।

(३) एवार्थलक्षिताः इति ख०, एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) यात्मस्तवमिति ग० ।

---

(क) ऋ० १०,१८२, १। (ख) ऋ० १०,१८३, १। (ग) ऋ०१०,१८४,१।

परन्तु[१] नेजमेषं हि[२] गर्भार्थं ताव[३]दुच्यते ॥८२॥
*माहिनं यच्चहि त्रीण[क]मादित्यानां स्तुतिं विदुः[४]।*
सूर्यवरुणमित्राणामादित्येष्वितरेषु तु[५] ॥८३॥
एत[६] एव त्रयो वाता स्तुताः स्वल्पेष्व[७]तोऽन्यथा।
शान्त्यर्थं सूक्तमेतद्धि पावनं चैव विश्रुतम् ॥८४॥
पातमपि स्वस्त्ययने दृष्टं तदनुमन्त्रणम्[८]।
उलोऽस्तौत्पितरं वातमाग्नेयं भाग्रये[ख] परम् ॥८५॥
विसृष्टं जातवेदस्यं प्रे[ग]ति दाशतयीषु[९] तु।
यत्किञ्चिदेव त्व[१०]ग्नेयं जातवेदस्यमुच्यते ॥८६॥
आयङ्गौ[घ]रिति यत्सूक्तं सार्पराज्ञी[११]स्वयं जगौ।

---

(१) मरे त्विति ख०।
(२) नेजमेषेतीति ख० ग०।
(३) वा तदि क० घ० च०।
(४) आदित्येष्वितरेषु त्विति क० घ० च०।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(६) एता इति क० घ० च०।
(७) स्वल्पेष्विति ख०।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(९) दाशतयीष्विति ख०।
(१०) अन्यत्रेति ख० ग०।
(११) सर्पराज्ञीति क० घ० ङ०।

---

(क) ऋ० १०, १८५, १। (ख) ऋ० १०, १८७, १। (ग) ऋ० १०, १८८, १।
(घ) ऋ० १०, १८९, १।

तस्मात् सा देवता[१] तत्र सूर्य्यमेके प्रचक्षते ॥८७॥
मुद्गलः शाकपूणिश्च आचार्य्यश्च रथीतरः[२] ।
चित्तानाधिष्ठितां वाचं मन्यन्ते प्रत्यृचं स्तुताम् ॥८८॥
भाववृत्तपरं[३] सूक्तं ददर्शाथाघमर्षणः ।
परं न विद्यते तस्माच्छान्त्यै वा पावनाय वा ॥८९॥
यथाश्वमेधः क्रतुराट् सर्व्वरिप्रप्रणोदनः[४] ।
तथाघमर्षणं ब्रह्म सर्व्वरिप्रप्रणोदनं[५] ॥९०॥
तदादीनि[६] तु यच्चातः संज्ञानं ज्ञानसंस्तवः ।
चतुर्थं यत्तु नैर्ऋत्यं तत्सपत्ननिवर्हणम्[७] ॥९१॥
संसमित्[क] प्राध्वराणाद्येत्याग्नेये एव ते स्तुते[८] ।

---

(१) तस्य स्याद्देवतेति क० ख० घ० च० ।
(२) आचार्य्यः शाकटायनः इति ख० ग० ।
(३) भाववृत्तमृतमिति क० घ० च० ।
(४) सर्व्वरीप्रप्रणोदनः इति ख० ।
(५) यथाश्वमेधः क्रतुराट् इत्यादि सर्व्वरिप्रप्रणोदनमित्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नापलभ्यते ।
(६) त्यदादीनीति क० घ० च० ।
(७) चतुर्थस्तैर्ऋत्य यत्तत्सपत्नीनिवर्हणमिति क० घ० च० ।
(८) उभे तत्राग्निदेवते इति क० घ० च० ।

---

(क) ऋ० १०, १९१, १ ।

उशना वरुणश्चेन्द्रश्चाग्निश्च सविता सुताः ॥८२॥
संज्ञानं प्रथमस्या[1]न्तु द्वितीयस्यामथाश्विनौ[2]।
तृतीया चोत्तमे च द्वे आशिषोऽभिवदन्ति ताः[3] ॥८३॥
इन्द्रः पूषा सपत्नघ्ने द्वितीयस्यामृचि स्तुतौ।
देवानामितराः प्रोक्ता आशीर्वादपराश्च याः[4] ॥८४॥
[5]महानाम्न्य ऋचो गुह्यास्ता ऐन्द्रश्चैव यो वदेत्।
सहस्रयुगपर्य्यन्तं सोऽहं ब्रह्म स राध्यते[6] ॥८५॥
[7]पुरीषपदमाधान्तु प्रथमं त्वात्प्रजापतेः[8]।

---

(१) प्रथमायामिति पाठः शुद्धः।

(२) उशना वरुणश्चेन्द्र इत्यादि द्वितीयस्यामथाश्विनावित्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।

(३) स त्वाशीर्व्वाद उच्यते इति क॰ घ॰ च॰।

(४) एष श्लोकः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

(५) ख॰ चिह्नितपुस्तके महानाम्न्य इति श्लोकात्प्राक्, संसंसंज्ञानमित्येते चैवनन्तं विदुरिति श्लोकार्द्धं वर्त्तते।

(६) राध्यतीति पाठः साधुः, सोऽहं ब्राह्मः सराध्यते इति क॰ घ॰ च॰, स्यात् ब्राह्मं स्वरं ध्याते इति ख॰।

(७) त्वमिद्देवतमिति ग॰।

(८) ख॰ चिह्नितपुस्तके पुरीषपदमाधान्त्विति श्लोकात् प्राक्,—

त्रिधाधर्म्मियात्मिकाः सूक्तानाद्य-
स्तस्मिन् सुतो वृध्यते यः सूक्तभावाः।
प्रधानसूक्तं किल देवतायाः
सूक्तभाजः सर्व्वदा शौनकेन॥

आग्नेयमैन्द्रं वैष्णवं पौष्णं दैवन्तु पञ्चमम्[१] ॥९६॥
अग्नेः प्रयाजानुयाजा प्रैषा ये च[२] हवींषि च।
यद्दैवत हविस्तु स्यात्प्रैषास्तद्देवतास्तु[३] ते ॥९७॥
निविदा निगदानाञ्च स्वैः स्वैर्लिङ्गैश्च देवता.[४]।
निगदेन[५] निगद्यन्ते याश्च कल्पानुगा ऋच. ॥९८॥
अग्नेरेव तु गायत्र्य उष्णिह.[६] सवितु' स्मृता।
अनुष्टुभस्तु सोमस्य बृहत्यस्तु बृहस्पतेः ॥९९॥

---

ऐन्द्रा ऋचो महानाम्नीस्तु विद्या
तथा हि दृष्ट ब्राह्मणसूक्तशब्द।
न दृश्यते सूक्तशब्दो न वित्सु
यथा प्रैषेष्वाहासूक्ताभिधानम्॥

सूक्तैकदेशा इति तान् प्रतीया-
दन्याश्च कुन्ता पदशो निषण्णा।
यथैतसो देवि निषादि सञ्जा
कुन्तापे तत्सर्व्वमेकं सूक्तम्॥
इत्यधिकपाठोऽस्ति।

(१) विन्द्र त्वा वैष्णवश्चैव पौष्णश्चैव मन परमिति ख॰।
(२) एवेति क॰ घ॰ च॰।
(३) चेति ख॰।
(४) लिङ्गोक्तदेवता इति क॰ घ॰ च॰।
(५) निगदेष्विति ख॰।
(६) उष्णिक इति ख॰, उष्णिहेति ग॰।

पङ्क्त्यस्त्रिष्टुभश्चैव विद्यादैन्द्र्यश्च सर्व्वशः ।
विश्वेषां चैव देवानां जगत्यो यास्तु काश्चन ॥१००॥
विराजश्चैव मित्रस्य स्वराजो वरुणस्य च ।
विषये यस्य वा स्यातां स्यातां वा वायुदेवते ॥१०१॥
इन्द्रस्यातिधृतिः प्रोक्ता वायोश्च भुरिजः स्मृताः[1] ।
यास्त्वतिच्छन्दसः काश्चित्ताः प्रजापतिदेवताः[2] ॥१०२॥
विच्छन्दसस्तु वायव्या मन्त्राः पादैश्च ये मिताः ।
पौरुषा द्विपदाः सर्व्वा ब्राह्म्य एकपदाः स्मृताः[3] ॥१०३॥
समस्ता ऋच आग्नेय्यो वायव्यानि यजूंषि च ।
सौर्य्याणि चैव सामानि सर्व्वाणि ब्राह्मणानि च ॥१०४॥
वैश्वदेवो वषट्कारो हिङ्कारो ये यजामहे ।
रूपं वज्रस्य वाक्पूर्व्वं स्वाहाकारोऽग्निदैवतः ॥१०५॥
देवानाञ्च पितॄणाञ्च नमस्कारः स्वधैव[4] च ।
क्रुष्टो मूर्द्धनि विज्ञेयस्तालव्यः प्रथमः स्वरः ॥१०६॥
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयः कर्णमंस्थितः ।
चतुर्थो नासिकाग्रे स्यादौरस्यो मन्द्र उच्यते ॥१०७॥

---

(१) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम् ।
(२) एतच्छ्लोकार्द्धं ख॰ चिह्नितपुस्तके न दृश्यते ।
(३) द्विपदा पौरुषं छन्दो ब्राह्मो ह्येकपदा स्मृता इति ख॰ ।
(४) स्वधेति ख॰ ।

मन्द्रकर्षणसंयुक्तमतिस्वारं प्रशंसति[१]।
वदन्ति देवताः क्रुष्टं मनुष्यास्तितरैस्त्रिभिः[२] ॥२०८॥
द्वितीयं वसवः[३] सर्व्वे गन्धर्वाप्सरसः स्वरम्।
अण्डजाः पक्षिणः सर्पाश्चतुर्थमुपभुञ्जते[४] ॥१०९॥
मन्द्राः पिशाचा रक्षांसि असुराश्चोपभुञ्जते[५]।
अतिस्वार[६]स्तु शेषस्य जङ्गमस्थावरस्य च ॥११०॥
वैश्वदेवस्वरः क्रुष्टो नित्यं यो मूर्ध्नि तिष्ठति[७]।
तालव्यः प्रथमः साम्नां स्वरं आदित्यदैवतः[८] ॥१११॥
स्वरो द्वितीयः साध्यानां भ्रुवोर्देशश्रितश्च यः[९]।
आश्विनस्तु[१०] तृतीयोऽच स्वरः कर्णसमाश्रितः ॥११२॥
चतुर्थस्तत्र[११] वायव्यो नासिक्यः स्वर उच्यते।

---

(१) तु तं विदुरिति ख०।
(२) सर्व्वा मनुष्याः प्रथमं स्वरमिति ख०।
(३) पशवः इति ख० ग०।
(४) तूपभुज्यते इति क० घ० च०, चतुर्थंचोपभुञ्जते इति ख०।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(६) अतिस्वार्य्यः इति क० घ० च०, अतिसार इति ख०।
(७) ख० चिह्नितपुस्तके, वदन्ति देवताः क्रुष्टमित्यादि नित्यं यो मूर्ध्नि तिष्ठतीत्यन्तं, द्वितीयस्तु भ्रुवोर्मध्ये इति श्लोकात् प्राक् पठितं।
(८) चेदन्त्य एव त्विति क० घ० च०।
(९) देशं समाश्रितः इति ख० ग०।
(१०) आग्नेयस्त्विति क० घ० च०।
(११) त्वेषु इति क० घ० च०।

पञ्चमस्तु स्वरः प्रोक्तश्चाक्षुषः सूर्य्यदेवतः(१) ॥११३॥
यस्तु सामस्वरः षष्ठः(२) स सौम्यो मन्द्र उच्यते ।
विकर्षेण तु मन्द्रस्य(३) युक्तोऽतिस्वार्य्य उच्यते ॥११४॥
स मैत्रावरुणो ज्ञेयो मन्द्रस्थानसमाश्रितः(४) ॥
सामस्वराणां सप्तानामेते देवा इहोदिताः(५) ॥११५॥
त्रयाणामितरेषां तु लोकाधिपतयस्त्रयः ।
वाग्देवत्योऽथ वाग्नेयः प्रस्तावश्चैव सामसु ॥११६॥
उद्गीथोपद्रवावैन्द्रौ स्यातां वा वायुदेवते ।
सौर्य्यः स्यात्प्रतिहारोऽथ निधनं वैश्वदेवतम् ॥११७॥
हिङ्कारप्रणवाभ्यान्तु पुरस्तादेव कीर्त्तनात् ।
इति व्यस्तसमस्तानां मन्त्राणामिह दैवतम् ।
देवताविद्वेचेत प्रयोगे सर्व्वकर्म्मणाम् ॥११८॥

सप्तर्षयो वसवश्चापि देवा
अथर्व्वाणो भृगवः सोमसूर्य्याः(६) ।

---

(१) एतदर्द्धश्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु नापश्यत ।
(२) षष्ठ इति क॰ घ॰ च॰ ।
(३) कर्षणेनैव मन्द्रस्येति क॰ घ॰ च॰, विकर्षेन तु मन्द्रस्येति ख॰ ।
(४) मन्द्रस्थानसमाश्रित इति क॰ घ॰ च॰, मन्द्रस्थानसमाश्रि च-श्रितेति ग॰ ।
(५) इति स्वराणां सप्तानामुक्ताः सामसु देवताः इति क॰ घ॰ च॰ ।
(६) चांशोऽर्य्यमा इति क॰ घ॰ च॰ ।

पथ्यास्वस्ती रोदसी चोक्तमन्त्रै-
कुहूर्गुङ्गुरदितिर्धेनुरध्या ॥११९॥
असुनीतिरिला वा धीः[१] विधातानुमतिर्दया।
अङ्गिरोभिः सहैताः सूक्तमन्त्राश्च देवताः ॥१२०॥
वैश्वानरो हि[२] सुपर्णो विवस्वान्
प्रजापतिर्गौः सुधन्वा नगोधः[२]।
अपां नपादर्यमा वातजूति-
रिलस्पतिश्चैव रयस्पतिश्च ॥१२१॥
ऋभवः पर्जन्यः पर्वताद्याश्च[४] पत्नी-
र्द्यौ भगो[५] देवपत्नीर्दिशश्च।
आदित्या रुद्राः पितरोऽथ साध्या
निपातिनो वैश्वदेवेषु सर्वे ॥१२२॥
अनुक्रान्ता देवताः सूक्तभाजो
हविर्भाजश्चोभयथा निपातैः।
अथैवं स्यादुभयथान्यथा वा
न प्रत्यक्षमनृषेरस्ति मन्त्रः ॥१२३॥

---

(१) स्यादिति ख॰ ग॰।
(२) द्यौ सुधन्वा गोध्य इति क॰ घ॰ च॰, न नद्य इति ग॰।
(३) च्यवीति ख॰ ग॰।
(४) वा गावश्चेति क॰ घ॰ च॰।
(५) भर्गः इति ग॰।

योगेन दाक्ष्येण दमेन बुद्धा
वाऊश्रुत्येन तपसा नियोगैः[1]।
उपास्यास्त्याः[2] कृत्स्नशो देवता या[3]
ऋचो ह यो वेद स वेद देवान्।
यजूंषि यो वेद स वेद यज्ञान्
सामानि यो वेद स वेद तत्त्वं ॥१२४॥

अशौ मे पुत्रकामाया अब्दादर्द्धं च त[4]त्ततम्।
आशिषो योगमेतं हि वाह्नौ गोर्धन[5] मन्यते ॥१२५॥
एकारमनुकम्पार्थं नाम्नि स्मरति माठरः।
आख्यातभूतकरणं[6] वाप्कुला स्त्री व्ययो रुत ॥१२६॥
मन्त्राणां देवताविद्यः प्रयुङ्क्ते कर्म्म कर्हिचित्।
जुषन्ते देवतास्तस्य[7] हवि[8]र्वा[9]देवताविदः ॥१२७॥
अविज्ञानप्रदिष्टं[10] हि हविर्नाश्नन्ति देवताः।

---

(१) अभियोगैरिति ख०।
(२) उपास्यास्ताः इति ख० ग०।
(३) दैवतस्येति क० घ० च०।
(४) स वामर्द्धेन यदिति क० घ० च०।
(५) बह्वो गौर्वेन्विति ख०।
(६) व्याख्याते भूतकरणमिति ख०।
(७) तस्येति ग०।
(८) हविर्वेति ख०।
(९) नेति क० ग० घ० च०।
(१०) अविज्ञातप्रदिष्टमिति क० घ० च०।

तस्मान्मनसि संन्यस्य देवता जुहुयाद्धविः ॥१२८॥
स्वाध्यायमेव(१) योऽधीते मन्त्रदैवतविच्छुचिः ।
स सत्त्रसदिव (२)स्वर्गे सत्त्रसद्भिरपीज्यते(३) ॥१२९॥
नियमोऽयं जपे होमे ऋषिच्छन्दोऽथ दैवतम् ।
अन्यथा चेत् प्रयुञ्जानस्तत्फलाच्चाव हीयते ॥१३०॥
ऋषिच्छन्दोदैवतादिज्ञानं यज्ञादिषु श्रुतम् ।
तदाश्रित्य प्राणदृष्टिर्विहितेति गम्यताम् ॥१३१॥
अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥१३२॥
अर्थेप्सवः खल्वृषयश्छन्दोभिर्देवताः पुरा ।
अभ्यधावन्निति च्छन्दो मध्ये लाङ्गमेदर्थयः ॥१३३॥
ऋषिन्तु प्रथमं ब्रूयाच्छन्दस्तु तदनन्तरम् ।
देवतामथ मन्त्राणां कर्मस्वेवमिति श्रुतिः ॥१३४॥
आसाद्य वा अनासाद्य(४) विविध्यात्मानमात्मनि ।
ईक्षमाणो भ्रुभौ सन्धिमृचो दैवतवित्पठेत् ॥१३५॥
स महाभूतमत्यन्तं योनिं सदसतोर्भुवम् ।
महयाण [illegible] विश्वं बिभर्ति ज्योतिरुत्तमम् ॥१३६॥

(१) इति शौनकाचार्यकृतायां बृहद्देवतायामष्टमोऽध्यायः ॥

समाप्ता बृहद्देवता ॥

(१) उपैति ख० ग० घ० ।
(२) सत्त्रसदपीति म० ।
(३) अपीज्यते इति ख० ग० घ० ।
(४) आसाद्यं शाम्बमाधारमिति म०, आसाद्यं शाम्बमाधारमिति म० ।

श्रीः

# अथार्षानुक्रमणी।

## प्रथमं मण्डलम्।

ऋग्वेदमखिलं ये हि द्रष्टारो मुनिपुङ्गवाः।
तदनुक्रमणायाहं नमामि परमेश्वरीम् ॥१॥
अग्निमीळ इत्यादि प्रथमं मण्डलं प्रति।
शतर्चिनस्तु विज्ञेया ऋषयः सुखसिद्धये ॥२॥
तेषां पूर्वो मधुच्छन्दा मेधातिथिरनन्तरः।
शुनःशेपस्तृतीयोऽयं हिरण्यस्तूप उत्तरः ॥३॥
कण्वस्तु पञ्चमः षष्ठः प्रस्कण्वः सव्य उत्तरः।
नोधाः पराशरश्चान्यो गोतमः कुत्स उत्तरः ॥४॥
काश्यपस्तथ कक्षीवान् परुच्छेपस्तदुत्तरः।
दीर्घतमास्ततोऽगस्त्यः षोड्शैते शतर्चिनः ॥५॥
ऋचां शतानि दृष्ट्वा(क)देत एव शतर्चिनः।
जेतादीनान्तु तन्नास्ति तस्मात्रैते शतर्चिनः ॥६॥

---

(क) शतानां दर्शनादिति पाठो भवितुमर्हति।

तत्र त्वादित आरभ्य सूक्तानां दशकं प्रति।
वैश्वामित्रो[क] मधुच्छन्दा ऋषिरित्यवगम्यताम् ॥७॥
इन्द्रं विश्वा(११)[ख] इति त्वस्य जेता तस्य सुतो मुनिः।
अग्निं दूत(१२)मुपक्रम्य सूक्तद्वादशकं प्रति ॥८॥
काण्वो मेधातिथिर्नाम मुनिरित्यवगम्यताम्।
कस्य नून(२४)मुपक्रम्य सूक्तानां सप्तकं प्रति ॥९॥
आजीगर्त्तिः शुनःशेप ऋषिरित्यवगम्यताम्।
अयन्तु देवराताख्यो वैश्वामित्रस्य कृत्रिमः ॥१०॥
त्वमग्न(३१) इत्युपक्रम्य सूक्तानां पञ्चकं प्रति।
हिरण्यस्तूपनामायमृषिराङ्गिरसः सुतः ॥११॥
प्र ये पङ्क(३६)मुपक्रम्य सूक्तानामष्टकं प्रति।
घोरस्य पुत्रः काण्वोऽयमृषिरित्यवगम्यताम् ॥१२॥
[ग]अभित्यं मेष(५१)मित्यादिसूक्तानां सप्तकं प्रति।
सव्य... हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१३॥
नू चित्सह...(५८) इत्यादि सूक्तानां सप्तकं प्रति।
गोतमस्य सुतो ना... ऋषिरित्यवगम्यताम् ॥१४॥

---

(क) विश्वामित्र इति ख०।

(ख) (११) चिह्नेनानेन सूक्तसङ्ख्या परिच्छेया। एवं परत्रापि। मण्डलसङ्ख्या तु मूलत एवावगम्यताम्।

(ग) अपि विवस्वदि(४४)त्यादि सूक्तानां सप्तकं प्रति।
कण्वस्य पुत्रः प्रस्कण्व ऋषिरित्यवगम्यताम् ॥

इत्येवं श्लोकोऽस्मात् पूर्व्वं भवितुमर्हति। सर्व्वानुक्रमण्यादौ तथैवोपलम्भात्।

पश्चा न तायु(६५)मित्यादिसूक्तानां नवकं प्रति ।
शाक्त्यः पराशरो नाम ऋषिरित्यवगम्यताम् ॥१५॥
उपप्रयन्त(७४) इत्यादिसूक्तानां विंशतिं प्रति ।
राहूगणो गोतमो(क)ऽयमृषिरित्यवगम्यताम् ॥१६॥
इमं स्तोम(९४)मुपक्रम्य सूक्तानां पञ्चकं प्रति ।
कुत्सो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१७॥
जातवेदस(९९) इत्यस्मिन् मारीचः काश्यपो मुनिः ।
स यो वृषे(१००)ति सूक्तस्य ह्यृषयो वार्षागिराः ॥१८॥
ऋज्राश्वः प्रथमस्तेषां भयमानसुराधसौ ।
सहदेवोऽम्बरीषश्च तेऽत्र सूक्ते प्रकीर्त्तिताः ॥१९॥
चन्द्रमा(१०५) इति सूक्तस्य त्रित आप्त्योऽथवा ऋषिः ।
नासत्याभ्या(११६)मुपक्रम्य सूक्तेष्वेकादशस्वथ ॥२०॥
कक्षीवान् दैर्घतमस उशिक्सूनुः स एव च ।
भावयव्यस्तु राजायमृषिरा गधिते(१२६,६)त्यृचः ॥२१॥
तद्भार्या रोमशा नामोपोत्तमस्या उपोत्तमे ।
अग्निं होतार(१२७)मित्यादिसूक्तेष्वेव चयोदश ॥२२॥
दैवोदासिः परुच्छेपो राजैवायमृषिस्ततः ।
वेदिषदे(१४०)प्रभृतीनां सूक्तानां पञ्चविंशतेः ॥२३॥
दीर्घतमा नामौचथ्य ऋषिरित्यवगम्यताम् ।
कया शुभेतिसंवाद इन्द्रादीनां हि तत्र तु॥२४॥

(क) गौतम इति घ० ।

कया शुभे(१६५)त्युपक्रम्य युजामासामृचां पुनः।
एकादश्या[क]श्चायमिन्द्र ऋषिरित्यवगम्यताम् ॥२५॥
ऋषयो मरुतस्तत्र तृतीयाद्ययुजामृचाम्।
सूक्तस्यान्ये तृचेऽगस्त्य ऋषिरित्यवगम्यताम् ॥२६॥
अगस्त्य एव तन्वा(१६६)दिमित्रावरुणयोः[ख] सुतः।
षड्विंशतेश्च सूक्तानामृषिरित्यवगम्यताम् ॥२७॥
इन्द्रागस्त्ययोः संवादो न नून(१७०)मिति तत्र तु।
प्रथमायास्तृतीयाया ऋचोरिन्द्र ऋषिः स्वयम् ॥२८॥
उभौ वाथ चतुर्थ्यास्तु द्वयोरन्यतरोऽथवा।
पूर्व्वी(१७९)रिति च सूक्तस्य संवादस्य तृचास्त्रयः ॥२९॥
लोपामुद्रा तृचे पूर्व्वे अगस्त्यो मध्यमे तृचे।
अन्तेवासी ब्रह्मचारी सूक्तस्यान्ते तृचे मुनिः ॥३०॥

इति प्रथमं मण्डलम्।

---

(क) एकादश्या इति क०।
(ख) वरुणादिमित्रावरुणयोरिति ग० घ०।

## अथ द्वितीयं मण्डलम् ।



मध्यमेष्वृषयो ज्ञेया मण्डलेष्वथ मध्यमाः ।
तत्र त्वमग्न(१) इत्यादिद्वितीयं मण्डलं प्रति ॥१॥
ऋषिर्गृत्समदो नाम विज्ञेयः स च शौनकः ।
औरसः शुनहोत्रस्य शुनकस्यैव कृत्रिमः ॥२॥
तस्मादाङ्गिरसः पूर्व्वं पश्चात्स भृगुताङ्गतः ।
हुवे व(४) इति सूक्तानां तत्रापि च चतुष्टये ॥३॥
सोमाहुतिर्भार्गवोऽयमृषिरित्यवगम्यताम् ।
इमा गिर(१०) उपक्रम्य सूक्तानां त्रितयं प्रति ॥४॥
ऋषिः कूर्म्मो गार्त्समदः स्वयं गृत्समदोऽथ वा ॥५॥

इति द्वितीयं मण्डलम् ।



# अथ तृतीयं मण्डलम् ।

सोमस्य मे(१)त्युपक्रम्य तृतीयं मण्डलं प्रति ।
विश्वामित्र इति ज्ञेयः स च गाथिसुतः[क] स्मृतः ॥१॥
ऋषभो द्वे प्र वः(१३) सूक्ते विश्वामित्रसुतो जगौ ।
विपाजसे(१५)ति सूक्ते द्वे कात्योत्कील ऋषिर्जगौ ॥२॥
समिध्यमानो(१७) द्वे सूक्ते वैश्वामित्रः कतो जगौ ।
अग्निं होतार(१९)मारभ्य गाथी नाम स कौशिकः ॥३॥
सूक्तान्यपश्यच्चत्वारि सूक्ते निर्मथिते परे ।
देवश्रवोदेववातावृषी एतौ हि भारतौ ॥४॥
कुशिकः शासदि(३१)त्यस्मिन्नैषीरथ्यसुतो मुनिः ।
अथवा मण्डलद्रष्टा विश्वामित्रो यथा श्रुतिः[ख] ॥५॥
प्र पर्वताना(३३)मित्यस्मिन् विपाडित्येवमादिभिः ।
नदीभिः सह संवादो विश्वामित्रस्योत्तितीर्षोः ॥६॥
अष्टमी दशमी षष्ठी चतुर्थी च नदीवचः ।
शिष्टा या नवसूक्तस्य विश्वामित्रवचांसि ताः ॥७॥
अस्मे प्रयन्धी(३६,१०)त्येतस्यां घोर आङ्गिरसो मुनिः ।

---

(क) गाधीसुतः इति क० ।

(ख) भुर्गिरसि क० ।

(३६,१०) चिह्नेनानेन षट्त्रिंशत्सूक्तस्य दशमी च अवगन्तव्या । एवं पर-त्रापि।

निर्देष्टेच्छ्यमानेऽपि श्रूयते[क] सा न गृह्यते ॥८॥
अभि तष्टेव(१८) सूक्तस्य वैश्वामित्रः प्रजापतिः ।
वाच्यो वा स उभौ वा तौ विश्वामित्रोऽथवा श्रुतेः ॥९॥
इमं मह(५४) उपक्रम्य सूक्तानां त्रितय प्रति ।
अयमेव ऋषिर्विद्यादुक्तगोत्रः प्रजापतिः ।
भार्गवो जमदग्निर्वा मण्डलान्त्ये तृचेऽप्यृषिः ॥१०॥

इति तृतीयं मण्डलम् ।

---

(क) प्रस्यमानेति श्रूयते इति भ० ।

# अथ चतुर्थं मण्डलम्।

त्वां ह्यग्ने सद(१)मित्यादि चतुर्थं मण्डलं प्रति ।
गौतमो वामदेवो[क]ऽस्यर्षिरित्यवगम्यताम् ॥१॥
अयं पन्थास्तु संवाद इन्द्रादेः सूक्तमत्र तु ।
अयं पन्था(१८) इति त्वस्या ऋच इन्द्रः स्वयं मुनिः ॥२॥
वामदेवस्तु पञ्चानामर्द्धर्चानां ततः परम् ।
न हि न्वस्या(१८,४)दिषण्णानामर्द्धर्चानां तथादितिः ॥३॥
ममच्चन त्वे(१८,८)त्यादीनामृचां पञ्चान्त एव तु ।
वामदेव ऋषिर्विद्यादन्याप्येवं विशेषतः ॥४॥
त्रसदस्युः पौरुकुत्स्य ऋषिः सूक्ते मम द्विता(४२) ।
क उ श्रव[ख](४३)दिति त्वस्य तथा तस्योत्तरस्य च ।
पुरुमीळ्होऽजमीळ्हश्च[ग] सौहोत्रौ तावृषी सह ॥५॥

इति चतुर्थं मण्डलम् ।

---

(क) गौतमो वामदेवोऽथेति ज० ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे क उ श्रवदिति पाठोऽस्ति ।
(ग) पुरुमीढोऽजमीढश्चेति ज० ।

## अथ पञ्चमं मण्डलम् ।

अबोध्यग्निरुपक्रम्य पञ्चमं मण्डलं प्रति ।
पुत्राद्यैः सह भौमोऽत्रिर्मुनिरित्यवगम्यताम् ॥ १ ॥
अत्र त्वनुक्तगोत्रा ये ज्ञेयास्त्वत्रिसुता इति ।
अबोध्यग्नि(१)रिति त्वस्मिन्नृषी बुधगविष्ठिरौ ॥ २ ॥
कुमार(२)मिति चैतस्मिन् कुमारो वा वृशोऽथवा ।
वृशो जार[क] इति ज्ञेय उभौ वात्र समुच्चितौ ॥ ३ ॥
कमेत(२,३)मिति चैतस्यां तथा विज्योतिषे(२,९)त्यृचि ।
वृश एव ऋषिर्विद्यान्न विकल्पसमुच्चयौ ॥ ४ ॥
त्वमग्न(१) इति सूक्तेषु चतुष्केषु वसुश्रुतः ।
सखायः सं व(७) इत्यस्मिन्निषस्तस्योत्तरेऽपि च ॥ ५ ॥
त्वामग्न(९) इति चैतस्मिन् गयस्तस्योत्तरेऽपि च ।
जनस्य गोपाः(११) सूक्तेषु चतुष्केषु सुतम्भरः ॥ ६ ॥
प्र वेधस(१५) इति त्वस्मिन् धरुणोऽङ्गिरसः सुतः ।
बृहद्वय(१६) इति त्वस्मिन् पुरु[ख]स्तस्योत्तरेऽपि च ॥ ७ ॥
प्रातरग्नि(१८)रिति त्वस्मिन्मृक्तवाहा द्वितो मुनिः ।
अभ्यवस्या(१९)यमग्ने (२०)च सूक्तयोरेतयोर्मुनिः ॥ ८ ॥

---

(क) जान इति सर्वानुक्रमण्यां दृश्यते ।
(ख) पूरुरिति सर्वानुक्रमण्यामुपलभ्यते ।

वव्रिर्नाम मुनिः पूर्वं प्रयस्वन्तस्तदुत्तरे ।
मनुष्वत्त्वे(२१)ति सूक्तस्य सप्तो नाम मुनिः स्मृतः ॥ ८ ॥
प्र विश्वसाम(२२)न्नित्यस्य विश्वसामेत्यृषिः स्मृतः ।
अग्ने सहन्त(२३)मित्यस्य द्युम्नोऽयं विश्वचर्षणिः ॥ १० ॥
अग्ने त्वं(२४) सूक्तमेकर्चां द्वैपदा विद्यते क्रमात् ।
विप्रबन्धुः श्रुतबन्धुः सुबन्धुर्बन्धुरित्यसौ ॥ ११ ॥
गौपायना इमे ज्ञेया आवा नौपायना[क] इति ।
स्थविरच्छा व(२५) [ख]इत्यस्मिन्नुत्तरे च वसूयवः ॥ १२ ॥
अनस्वन्ते(२७)ति सूक्तस्य त्रिवृष्णपुरुकुत्सजौ ।
त्र्यरुणस्त्रसदस्यू द्वावश्वमेधश्च भारतः ॥ १३ ॥
अन्त्यानां तिसृणामेषां पूर्व्वाणामितरौ सह ।
अथवा भौम एवात्रिस्तृचिरत्र न शस्यते[ग] ॥ १४ ॥
दानक्रियायमेकस्य दाढनदाढता यतः[घ] ।
समिद्धो अग्नि(२८)रित्यस्मिन् विश्ववाराचिगोत्रजा ॥ १५ ॥
त्र्यर्यमे(२९)त्यस्य सूक्तस्य गौरिवीतिः स शाक्तिजः ।
कस्य वीरः क(३०) इत्यस्य बभ्रुर्नाम ऋषिः स्मृतः ॥ १६ ॥
इन्द्रो रथाय(३१)सूक्तेऽस्मिन्नवस्यु[ङ]र्नाम संस्मृतः ।

(क) लौपायना इति सर्वानुक्रमणी ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे, स्थच्छ व इति पाठोऽस्ति ।
(ग) प्रशस्यते इति घ० च० ।
(घ) दानक्रियेयमेकस्य दाढतादाढता यत इति पाठः सम्भवितुमर्हति ।
(ङ) गातस्युरिति सर्वानुक्रमणी ।

अदर्दरुत्स(३२)मित्यस्य गातुर्नाम मुनिः स्मृतः ॥१७॥
प्राजापत्यः संवरणः सूक्ते महि महे (३३)जगौ ।
प्रभुवसु[क]राङ्गिरसो यस्ते साधिष्ठ(३५) इत्युभे ॥१८॥
सम्भानुने(३७)त्युपक्रम्य सूक्तानां सप्तकं प्रति ।
अत्रिरेव स्वयं भौम ऋषिरित्यवगम्यताम् ॥१९॥
तं प्रत्नथे(४४)ति सूक्तेऽस्मिन्नवत्सारो हि काश्यपः ।
अन्यैश्च दशभिः साकमृषिरित्यवगम्यताम्[ख] ॥२०॥
सदापृणो यजतो[ग]स्य बाहुवृक्तः सुतम्भरः ।
श्रुतवित्तर्थ्यनामा स एवावदो मनसः ॥२१॥
ऋवसप्ती इमे चान्ये दृष्टलिङ्गा हि सूक्तके ।
विद्मा दिव(४५) इति त्वस्मिन्नृषिरेव सदापृणः ॥२२॥
हयो न विद्वा(४६)नित्यस्मिन् प्रतिक्षत्र ऋषिः स्मृतः ।
प्रयुञ्जती(४७)ति सूक्तेऽस्मिन्नृषिः प्रतिरथः स्मृतः ॥२३॥
कदूं प्रियाय(४८)सूक्तेऽस्मिन् देवं व(४९) इति चोत्तरे ।
ऋषिः क्रमेण विज्ञेयः प्रतिभानुः प्रतिप्रभुः[घ] ॥२४॥
विश्वो देवस्य(५०) सूक्तस्य तथैवाग्ने सुतस्य(५१) च ।
उभयोरनयोरेव स्वस्त्यात्रेय इति स्मृतः ॥२५॥

---

(क) प्रभूवसुरिति सर्वानुक्रमण्यां ।

(ख) एष श्लोकः, ज० चिह्नितपुस्तके, सम्भानुनेत्युपक्रम्येति श्लोकात् प्राक् पठितः ।

(ग) यजतः इति पाठः सङ्गतः । सदापृणो यजताविति घ० ।

(घ) प्रतिप्रभ इति सर्वानुक्रमण्यां ।

प्र श्यावाश्व(५२) उपक्रम्य दशसूक्तेष्वतः परम् ।
श्यावाश्वो मरुतां स्तोता मुनिरित्यवगम्यताम् ॥२६॥
घृतेन घृत(६२)मित्यस्य सूक्तेऽयं[क] श्रुतविन्मुनिः ।
ऋतस्य गोपा(६३)वित्यस्मिन् वरुणं व (६४) इतीह च ॥२७॥
अर्चनाना ऋषिर्विद्याद्यच्चिकेते(६५)ति सूक्तयोः ।
रातहव्योऽथ यजतो बलित्येति(६७) च सूक्तयोः ॥२८॥
उरुचक्रिर्वाङ्ग्रक्तः पौरस्त्वेव इयोर्द्वयोः ।
प्रतिप्रियतमं(७५) सूक्तमवस्युर्दृष्टवान्मुनिः ॥२९॥
अत्रिरेव मुनिर्भौम आभात्यग्नि(७६)रिति द्वयोः ।
अश्विनावेह(७८) सूक्तस्य सप्तवध्रिर्ऋषिः स्मृतः ॥३०॥
सत्यश्रवा ऋषिर्नाम महे नो अद्य(७९)सूक्तयोः ।
युञ्जते मन(८१) इत्यत्र श्यावाश्वः सूक्तयोर्ऋषिः ॥३१॥
अत्रिरच्छा वदे(८३)[ख]त्यादिचतुःसूक्तेष्वृषिः स्वयम् ।
मण्डलान्तस्य सूक्तस्य प्र व(८७) इत्येवयामरुत् ॥३२॥

इति पञ्चमं मण्डलम् ।

---

(क) चेति च० ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्याम् अच्छ वदेति पाठो वर्त्तते ।

## अथ षष्ठं मण्डलम् ।

त्वं ह्यग्न इत्युपक्रम्य षष्ठाख्यं मण्डलं प्रति ।
बार्हस्पत्यो भरद्वाज ऋषिरित्यवगम्यताम् ॥ १ ॥
तत्राप्यन्ये भरद्वाजादृच्यन्ते येऽपवादतः ।
तेषामनुक्तगोत्रास्तु विज्ञेयास्तत्सुता इति ॥ २ ॥
इममू षु व (१५) इत्यस्य सूक्तस्याङ्गिरसः सुतः ।
वीतहव्यो विकल्पेन मुनिरित्यवगम्यताम् ॥ ३ ॥
अभूरेक(३१)स्त्वपूर्व्ये(३२)ति सुहोत्रः सूक्तयोर्ऋषिः ।
शुनहोत्रो य ओजिष्ठः(३३) सच त्वे(३४) चेति सूक्तयोः ॥४॥
कदा(३५) सद्मा इमा(३६)स्तु सूक्तयोरनयोर्नरः ।
ऋषिर्यो रयि व(४४)स्त्वादिसूक्तानां त्रितयं प्रति ॥५॥
यज्ञा यज्ञीय(४८)सूक्ते च शंयुः पुत्रो बृहस्पतेः ।
स्वादुष्किलाय(४७)मित्यस्य गर्गो नाम ऋषिः स्मृतः ॥६॥
स्तुषे जन(४९)मुपक्रम्य चतुःसूक्तेष्वयं मुनिः ।
ऋजिश्वा ये सुहोत्राद्याः पौत्राश्चैते बृहस्पतेः ॥ ७ ॥
जीमूत(७५)सूक्ते पायुस्तु भारद्वाज ऋषिः स्मृतः ।
उक्तापवादविषयादितरत्रात्र मण्डले ।
स्वयमेव भरद्वाज एवं सर्व्वत्र गम्यताम् ॥ ८ ॥

इति षष्ठं मण्डलम् ।

# अथ सप्तमं मण्डलम् ।

अग्निं नर इति लेतत्सप्तमं मण्डलं प्रति ।
ऋषिर्वसिष्ठो विज्ञेयो मित्रावरुणयोः सुतः ॥ १ ॥
इन्द्र क्रतुं न (३२,२६) इत्यस्मिन्नर्द्धर्चे मो षु (३२)सूक्तके ।
वसिष्ठपुत्त्रः शक्तिर्वा वसिष्ठो वा स्वयं मुनिः ॥ २ ॥
श्वित्यञ्च(३३) इति सूक्तस्य नवानामादितस्त्वृचां ।
वसिष्ठ एव पञ्चानां विद्युतो ज्योति(३३,१०)रित्यृचाम् ॥ ३ ॥
वसिष्ठपुत्त्रा इन्द्रो वा ऋषिरित्यवगम्यताम् ।
तिस्रो वाच(१०१) इति तस्मिन् पर्ज्जन्याये(१०२)ति चोत्तरे ।
अग्निपुत्त्रः कुमारो वा वसिष्ठो वा स्वयं मुनिः ॥ ४ ॥

इति सप्तमं मण्डलम् ।

## अथाष्टमं मण्डलम्।

मा चिदन्यदिति(१)ल्वितदष्टमं मण्डलं प्रति ।
*प्रगाथाद्यृषयो ज्ञेयाः शृणु वक्ष्यामि तानिह* ॥ १ ॥
अनुक्तगोत्रो यस्तत्र मण्डले लक्ष्यते मुनिः ।
स तु काण्व इति ज्ञेयः प्राक्प्रस्कण्वात्सोमदादृषेः ॥ २ ॥
मण्डलाद्यद्वृचस्यायं प्रगाथो घौरजो मुनिः ।
स हि घोरस्य कण्वस्य भ्राता सन् पुत्रतां गतः ॥ ३ ॥
मेधातिथिः परस्तस्मात्स मेधातिथिना सह ।
यच्चिद्धि त्वे(१,१)त्यृचामासामृषिरासप्रविंशतेः ॥ ४ ॥
स्तुहि स्तुहौ(१,१०)त्याद्यानामृचां चतसृणामृषिः ।
प्रयोग[क]पुत्र आसङ्गस्तस्य पत्नी तु शश्वती ॥ ५ ॥
अन्वस्य स्थूर(१,१४)मित्यस्याः सा च त्वङ्गिरसः सुता ।
मेधातिथिप्रियमेधावृषी सूक्ते इदं वसो(२) ॥ ६ ॥
आङ्गिरसः प्रियमेधस्तत्र मेधातिथिर्मुनिः ।
भिद्रा वि भिन्दो[ख](२,४१) इत्यस्य द्वृचस्यान्यस्य केवलम्॥७॥
पिबा सुतस्य(२)[ग] सूक्तस्य मेधातिथिर्ऋषिः स्मृतः ।
यदिन्द्र प्रागपाक्(४) सूक्ते देवातिथिर्मुनिः स्मृतः ॥ ८ ॥

(क) प्रयोग इति सर्वानुक्रमण्यां ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे भिन्द वि भिन्दो इति पाठोऽस्ति।
(ग) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्याञ्च पिब सुतस्येति पाठो वर्त्तते ।

दूरादिहेव(४) सूक्तस्य ऋषिर्मेधातिथिस्ततः(क)।
महानिन्द्रो य(६)इत्यस्मिन् वत्सो नाम ऋषिः स्मृतः ॥ ९ ॥
प्र यदस्मिष्टुभं(७) सूक्ते पुनर्वत्स ऋषिः स्मृतः।
आ नो विश्वाभि(८)रित्यस्मिन् सध्वंसो नाम संस्मृतः ॥ १० ॥
आ नूनमश्विने(९)त्यस्मिञ्छ्यावकर्ण ऋषिः स्मृतः।
यत्स्थ(१०) इत्यस्य सूक्तस्य प्रगाथो नाम संस्मृतः ॥ ११ ॥
त्वमग्ने व्रतपाः(११) सूक्ते वत्स एव मुनिः स्मृतः।
ऋषिर्य इन्द्र(१२) सूक्तस्य पर्वतो नाम संस्मृतः ॥ १२ ॥
इन्द्रः सुतेषु(१३) सूक्तस्य नारदो मुनिरेव सः।
यदिन्द्राह(१४)मिति तस्मिंस्तमु(१५)मित्युत्तरेऽपि च ॥ १३ ॥
गोषूक्ती चाश्वसूक्ती च ऋषी एतौ काण्वायनौ।
प्र सम्राज(१६)मिति त्रीणि सूक्तानीरिम्बिठिर्जगौ ॥ १४ ॥
तं गूर्धये(१९)ति चत्वारि ऋषिः सूक्तानि सोभरिः।
ईळिष्व हि(२३)त्युपक्रम्य चतुःसूक्तेष्वतः परम् ॥ १५ ॥
ऋषिर्विश्वमना नाम स वैयश्व इतिः स्मृतः।
एषां चतुर्थे सूक्ते तु व्यश्वो वाङ्गिरसो मुनिः ॥ १६ ॥
अग्निरुक्थे(२७) उपक्रम्य पञ्चसूक्तेष्वतः परम्।
मनुर्वैवस्वतो नाम ऋषिरित्यवगम्यताम्।
एषां तु मध्यमे सूक्ते मारीचो वाथ कश्यपः ॥ १७ ॥
मेधातिथिस्तु प्रकृतानि(३२) सूक्तं
मेध्यातिथिस्तच वयमु(३३)सूक्तम्।

(क) स्मृत इति ग॰।

नीपातिथिः सूक्तमथेन्द्र याहि(३४)
एवं तथान्यं वसुरोचिषश्च ॥१८॥
सहस्रमेतेऽङ्गिरसो ह्यपश्यं-
स्ततोऽग्निनेन्द्रेण(३५) ततोऽविते(३६)ति ।
चतुर्षु सूक्तेष्वत उत्तरेषु
श्यावाश्वनामा मुनिरत्रिगोत्रः ॥१९॥

अग्निमस्तोषि(३९)सूक्तेषु नाभाकोऽथ चतुर्ष्वपि ।
एषां चतुर्थे सूक्ते वा तस्य चान्ये ह्यचेऽथवा ॥२०॥
आर्चेयस्त्वर्चनाना वा मुनिरित्यवगम्यताम् ।
इमे विप्रस्य(४३) सूक्तेऽग्निन्समिधाग्नि(४४)मितीह च ॥२१॥
विरूपोऽङ्गिरसः पुत्रस्त्रिष्वेकस्मात उत्तरे ।
सूक्ते त्वावत(४६) इत्यश्व्यपुत्र ऋषिर्वशः ॥२२॥
महि वो महतां(४७) सूक्ते आप्त्यस्त्रित ऋषिः स्मृतः ।
स्वादोरभक्षि(४८)सूक्तस्य प्रगाथाख्य ऋषिः स्मृतः(क) ॥२३॥

---

(क) अतः परं, एकादश सूक्तानि मोक्षमूलरसम्पादितऋग्वेदे समुपलभ्यन्ते। तानि तु सायणेन न व्याख्यातानि। अत्रापि च तेषां न ऋष्यादिनिरूपणमस्ति। किन्तु सर्वानुक्रमण्यां तत्र तत्र उपलभ्यते। यथा, अभि प्र(४९) वस्य पद्मसुः • • • •। प्रसुश्रुतं (५०) पुरुद्रुः। यथा मनौ (५१) सुप्रियः। यथा मनौ (५२) वायुः। उपमं त्वा(५३)एतौ मेध्यः। एतत्त (५४) मातरिश्वा • •। भूरीत् (५५) पञ्च कृशः • • • •। प्रति ते (५६) पृषध्रः • • • •। युवं देवा (५७) मनुष्क्रं मेध्यः • • • •। इमानि वां (५९) सप्त सुपर्णाः • • • •। इति। वेदार्थदीपिकायां तत्तु मैक्षमूलान् सन्दर्भो व्याख्यातः। जगन्नाथकृतानुक्रमणिकाविवरणे तु सूक्तानामेषामृष्यादिनिरूपणमुपलभ्यते।

अग्न आ याहि(६०) सूक्तस्य तथा तस्योत्तरस्य च।
भर्गः प्रगाथपुत्रोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रगाथ एव प्रो अस्मै(६२) सूक्तेष्वेषु चतुर्ष्वृषिः।
तरोभि(६६)रितिसूक्तस्य प्रगाथतनयः कलिः ॥२५॥

सूक्ते लिह त्यान्नु(६७)ति सांमदो वा
मत्स्यो मुनिस्तत्सहचारिणो वा।
जालेन नद्धा[क] बहवो हि मत्स्या
मान्योऽथ मैत्रावरुणिः स्वयं वा ॥२६॥

आ त्वा रथ(६८)मिति त्वस्य प्र प्र वस्त्रिष्टुभस्य(६९)[ख] च।
आङ्गिरसः प्रियमेध ऋषिरित्यवगम्यताम् ॥२७॥
यो राजे(७०)ति च सूक्तस्य त्वं न(७१) इत्युत्तरस्य च।
आङ्गिरसः पुरुहन्मा मुनिरत्र यदुत्तरम् ॥२८॥
तत्र त्वन्यतरोऽयं वा सुदीतिपुरुमीळ्हयोः।
हविष्कृणुध्व(७२)मित्यस्मिन् प्रागाथो हर्य्यतो मुनिः ॥२९॥
उदीराथा(७३)मिति त्वस्य तथा तस्योत्तरस्य च।
आत्रेयोऽयं गोपवन ऋषिरित्यवगम्यताम् ॥३०॥
आत्रेयः सप्तवध्रिर्वा तयोः पूर्वस्य गम्यताम्।
ऋषिर्युक्ष्वा हि[ग](७५) सूक्तस्य विरूपो वाङ्गिरसः सुतः॥३१॥
इमं नु(७६) सूक्तमारभ्य त्रिषु सूक्तेष्वतः परम्।

---

(क) बद्धा इति अ०।
(ख) मोक्षमूलरमुद्रितऋग्वेदे त्रिष्टुभमिति पाठो वर्त्तते।
(ग) मोक्षमूलरमुद्रितऋग्वेदे युक्ष्वा हीति पाठो वर्त्तते।

पान्तमा व(९१) इति त्वस्य तार्क्ष्यो अवगम्यताम् ॥४०॥
उद्वेदभी(९३)ति सूक्तस्य सुकचः स्वयमेव तु।
गौर्धयती(९४)ति सूक्तस्य विन्दुरङ्गिरसः सुतः।
पूतदक्षोऽथवा ज्ञेयः सोऽपि चाङ्गिरसः सुतः ॥४१॥

आ ते(९५)ति सूक्ते तत उत्तरे च
तिरश्चिनामा[(क)]ङ्गिरसस्तनूजः।
तचोत्तरे मारुतिर्वा द्युतानो
रेभस्ततः काश्यप उत्तरस्य ॥४२॥

इन्द्राय साम(९८) सूक्तस्य तथा तस्योत्तरस्य च।
नृमेधनामाङ्गिरस ऋषिरित्यवगम्यताम् ॥४३॥
अयन्त एमि(१००) सूक्तस्य नेमो नाम भृगोः सुतः।
अयमग्नि(१००,४) इचे त्वग्निरिन्द्र एव ऋषिः स्मृतः ॥४४॥
ऋषगित्थे(१०१)ति सूक्तस्य जमदग्निः स भार्गवः।
त्वमग्न(१०२) इति सूक्तस्य प्रयोगो नाम भार्गवः ॥४५॥
अथवा वृहस्पत्यः पावकोऽग्निर्मुनिः स्मृतः।
गृहपतियविष्ठाख्यावग्नी वा सहसः सुतौ ॥४६॥
तयोरन्यतरो वाग्न्योर्ऋषिरित्यवगम्यताम्।
ऋषिस्त्वदर्शि(१०३) सूक्तस्य सोभरिर्नाम काण्वजः ॥४७॥

इत्यष्टमं मण्डलम्।

---

(क) तिरश्चो नामेति सर्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च।

# अथ नवमं मण्डलम् ।

स्वादिष्ठये(१)त्युपक्रम्य नवमं मण्डलं प्रति ।
पावमान्यस्तु विज्ञेया ऋषयः सौमिकाश्च ते[क] ॥ १ ॥
मण्डलाद्यस्य सूक्तस्य मधुच्छन्दा ऋषिः स्मृतः ।
पवस्व देववीः(२) सूक्ते मेधातिथिरिति स्मृतः ॥ २ ॥
एष देव(३) इति त्वस्य शुनःशेपो मुनिः स्मृतः ।
सना च सोम(४)[ख] सूक्तस्य हिरण्यस्तूप ऋषिः स्मृतः ॥३॥
एतेषामुक्तगोत्रत्वाद्गोत्रोक्तिर्न कृता मया ।
समिद्ध(५) इत्युपक्रम्य सूक्तानां विंशतिं प्रति ॥ ४ ॥
असितो वा देवलो वा ह्यृषिरेतौ तु काश्यपौ ।
ऋषिः पवस्व(२५) सूक्तेऽस्मिन्नागस्त्यः स दृढच्युतः ॥ ५ ॥
दृढच्युतस्य पुत्रोऽयमिध्मवाहस्तदुत्तरे ।
एष कवि(२०)रेष वाजी(२८) सूक्तयोरनयोः क्रमात् ॥६॥
नृमेधः प्रियमेधश्च मुनिराङ्गिरसाविमौ ।

---

(क) सर्व्वानुक्रमणीवेदार्थदीपिकाजगन्नाथकृतानुक्रमणिकाविवरणेषु नवममण्डलस्य सोमदेवताकत्वकीर्त्तनमस्ति। अत्र तु नवममण्डले सौमिकानामृषित्वं दृश्यते। अत्र शौनक एव प्रमाणम्। अथवा सोमो देवता येषामिति व्युत्पत्त्या ऋषयोऽपि सौमिका इति व्यपदिश्यन्ते। अधिकेन व्यपदेशा भवन्तीति न्यायात्।

(ख) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्याञ्च सन च सोमेति पाठो वर्त्तते।

प्रास्य(२९) प्र धारा अस्ये(३०)ति सूक्तयोरनयोः क्रमात् ॥७॥
नृमेधश्चाथ विन्दुश्च मुनिरङ्गिरसः सुतः ।
प्र सोमासः (३१) प्र सोमासः(३२) सूक्तयोरनयोः क्रमात् ॥८॥
राहूगणो गोतमोऽयं श्यावाश्वश्चात्रिगोत्रजः ।
प्र सोमास(३३) उपक्रम्य द्वयोराद्यस्त्रितो मुनिः ॥९॥
द्वयोर्द्वयोरुत्तरयोर्द्वयोरङ्गिरसः सुताः ।
प्रभूवसुरहूगणो वृहन्मतिरिमे त्रयः ॥१०॥
प्र ये गाव(४१) उपक्रम्य त्रिषु सूक्तेष्वतः परम् ।
मेध्यातिथिः स्वयं काण्व ऋषिरित्यवगम्यताम् ॥११॥
त्रिष्वेवाङ्गिरसोऽयास्यः प्र ण(४४) इत्युत्तरेष्वृषिः ।
कविस्तु भार्गवः सूक्तेष्वया सोम(४७) इति त्रिषु ॥१२॥
उचथ्यस्त्रिषु सूक्तेषूत्त(५०) इत्यङ्गिरसः सुतः ।
उत्ते(५३) सूक्त उपक्रम्य सूक्तानामष्टकं प्रति ॥१३॥
काश्यपोऽयमवत्सार ऋषिरित्यवगम्यताम् ।
अया वीती(६१)ति सूक्ते चामहीयुरङ्गिरःसुतः ॥१४॥
एते असृग्र(६२)मित्यस्मिन् जमदग्निर्भृगोः सुतः ।
आ पवस्वे(६३)ति सूक्तेऽस्मिन्निभुविः काश्यपो मुनिः ॥
वृषा सोमे(६४)ति सूक्तेऽस्मिन् मारीचः काश्यपो मुनिः॥१५॥

हिन्वन्ति(६५)सूक्तं जमदग्निरार्षः
स्वयं भृगुर्वा वरुणस्य पुत्रः ।
अथिद्गुगोत्रास्तु पवस्व(६६)सूक्तं
वैखानसा नाम शतं विदुस्ते ॥१६॥

त्वं सोम(१७)सूक्ते महचासुचेषु
सुख्येषु सप्तऋषयः प्रसिद्धाः ।
भरद्वाजः कश्यपो गोतमोऽत्रि-
र्विश्वामित्रो जमदग्निर्वसिष्ठः ॥१७॥

उत्तराणां तु शिष्टानामृचामङ्गिरसः सुतः ।
पवित्रो वा वसिष्ठो वा ह्युभौ वा तादृशौ सह ॥१८॥
प्र देव(१८)मिति वत्सप्रिः[क] सूक्तं भालन्दनो जगौ ।
इषुः(१९) सूक्तं त्वाङ्गिरसो हिरण्यस्तूप उत्तरम् ॥१९॥
त्रिरस्मा(००) इति सूक्तेऽस्मिंस्तत्र श्वा दक्षिणो(०१)त्तरे ।
वेणुः पूर्वोऽथ ऋषभो वैश्वामित्रौ च तादृशौ ॥२०॥
हरिं मृजन्ति(०२) सूक्तस्य सके द्रप्सस्य(०३) च क्रमात् ।
हरिमन्तः पवित्रश्च मुनिरङ्गिरसः सुतः ॥२१॥
शिशुर्न(०४) सूक्ते कक्षीवान्मुनिर्दीर्घतमःसुतः[ख] ।
अभि प्रियाणु(०५)पक्रम्य पञ्चसूक्तेष्वतः परम् ॥२२॥
कविर्नाम भृगोः पुत्र ऋषिरित्यवगम्यताम् ।
सोमस्य धारे(८०)त्यादीनां सूक्तानां त्रितयं प्रति ॥२३॥
भारद्वाजो वसुर्नाम मुनिरित्यवगम्यताम् ।
पवित्र(८३)मिति सूक्तस्य पवित्रोऽङ्गिरसः सुतः ॥२४॥
ऋषिः पवस्व(८४) सूक्तस्य वाच्यो नाम प्रजापतिः ।
इन्द्राय सोम(८५) सूक्तस्य वेनो नाम स भार्गवः ॥२५॥

---

(क) वत्सप्रीरिति सर्वानुक्रमणी ।
(ख) दीर्घतमः सुत इति प० पु० । कक्षीवानौशिज इत्यनुक्रमणिका-विवरणम् ।

प्र ते(८६) हि सूक्तं प्रथमं दशर्च-
मऋष्टमाया ऋषयो विदुस्ते ।
निवावरी(क)स्ते सिकता द्वितीयं
तृतीयमेते खलु पृश्नयोऽजाः ॥२६॥
गणास्त्रयोऽमी कथितास्तुतुर्थ-
मेषां तु गोत्रं क्वचिदप्रसिद्धम् ।
शिष्टाश्च पञ्चस्त्वृषिरचिरेता-
स्तन्ये तृचे गृत्समदः प्रसिद्धः ॥२७॥

प्र तु द्रवे(८७)त्युपक्रम्य सूक्तानां त्रितयं प्रति ।
कात्योऽयमुशना नाम ऋषिरित्यवगम्यताम् ॥२८॥
प्र हिन्वानो(९०) वसिष्ठस्तु मित्रावरुणयोः सुतः ।
असर्जि वक्का(९१)सूक्तस्य तथा तस्योत्तरस्य च ॥२९॥
मारीचः कश्यपो नोधाः शाकमुचस्य(९१)(ख) गौतमः ।
अधि य(९४)च कनिक्रन्ति(९५) सूक्तयोरनयोः पुनः ॥३०॥
घोरः कण्व ऋषिः पूर्व्वे काण्वः प्रस्कण्व उत्तरे ।
प्र सेनानी(९६)ति सूक्तस्य दैवोदासिः प्रतर्दनः ॥३१॥
अग्न प्रेषे(९७)ति सूक्तस्य वसिष्ठः प्रथमे तृचे ।
उत्तरेषु नवस्वेते तस्य पुत्राः पृथक् पृथक् ॥३२॥
इन्द्रप्रमतिरेकस्तु तेषां वृषगणः परः ।

---

(क) निवावरीरिति प्रथमार्धे द्वितीयेऽन्यार्धम् ।

(ख) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकायाश्चादर्शे च शाकमुच इति पाठो वर्त्तते ।

मन्युश्च उपमन्युश्च व्याघ्रपाच्छक्तिरुत्तरः ॥२३॥
कर्णश्रु[क]श्च मृळीकस्य वसुक्रो नवमः स्मृतः ।
चतुर्दशानां शिष्टानामृचां शाक्त्यः पराशरः ॥२४॥
सोमः सुत(९७,४४)स्तथान्यानां कुत्स आङ्गिरसो मुनिः ।
अम्बरीषोऽभि नः(९८) सूक्ते मान्धातृतनयस्तथा ॥२५॥
भारद्वाज ऋजिश्वा च तावेतौ सहितावृषी ।
रेभसूनू काश्यपौ च द्वयोरुत्तरयोर्ऋषी ॥२६॥
पुरोजितो(१०१)ति सूक्तस्य सद्वचा ऋषयः स्मृताः ।
श्यावाश्वः[ख] प्रथमोऽन्धीगुर्ययातिर्नाहुषः परः ॥२७॥
नहुषो मानवस्त्वेको मनुः सांवरणः परः ।
चत्वार एते सद्वचाः शेषे वाच्यः प्रजापतिः ॥२८॥
क्राणे(१०२)त्याप्त्यस्त्रितः सूक्ते द्वित आप्त्यस्तदुत्तरे ।
पर्व्वतो नारदः काण्वौ[ग] सखायः(१०४) सूक्तयोः षड् ॥२९॥
पूर्व्वे तु द्वे शिखण्डिन्यौ काश्यप्यौ वाप्सरः स्त्रियौ ।
इन्द्रमच्छे(१०६)ति सूक्तस्य सद्वचा ऋषयस्त्रयः ॥४०॥
चाक्षुषोऽग्निश्च चक्षुश्च मानवो मनुराप्सवः ।
सूक्तस्य शिष्टे पञ्चर्चे चाक्षुषोऽग्निर्ऋषिः स्मृतः ॥४१॥

---

(क) कर्णश्रुदिति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।
(ख) श्यावाश्विरिति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।
(ग) काण्वायिनश्च काश्यपाविति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च । वेदार्थदीपिकायान्तु तौ काण्वाविति व्याख्यातम् ।

परीत(१०७) इति सूक्तेऽस्मिन् भारद्वाजादयो[क] विदुः ।
एते तु सप्त ऋषयः सगोत्राः परिकीर्तिताः ॥४२॥
पवस्वे(१०८)त्युत्तरं सूक्तं सप्तैते त्वृषयो विदुः ।
तत्र त्वाद्ये तृचे शाक्त्यो गौरिवीतिर्ऋषिः स्मृतः ॥४२॥
तृतीयाया ऋचः शक्तिर्वासिष्ठोऽन्ये तृचेऽपि च ।
अथ तृचानां शिष्टानामूरुराङ्गिरसो मुनिः ॥४४॥
भारद्वाज[ख] ऋजिश्वा च तथैवाङ्गिरसौ नृपाः ।
ऊर्ध्वसद्मा कृतयशा ऋणञ्चय इति त्रयः ॥४५॥
धिष्ण्याग्नयः[ग] परि प्रे(१०९)ति सूक्तमैश्वरयो विदुः ।
पर्यू षु प्रे(११०)ति सूक्तस्य त्र्यरुणपुरुकुत्सजौ ॥४६॥
त्र्यरुणस्त्रसदस्युश्च मुनिरित्यवगम्यताम् ।
अया रुचे(१११)ति सूक्तस्य पारुच्छेपिरनानतः ॥४७॥
नानान(११२)मिति सूक्तस्य शिशुराङ्गिरसो मुनिः ।
शर्य्यणावति(११३)सूक्तस्य य इन्दो(११४)इत्यस्य च ॥४८॥
मारीचः कश्यपो नाम ऋषिरित्यवगम्यताम् ।

इति नवमं मण्डलम् ।

---

(क) भरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठा इति षड्गुरु-शिष्यविवरणं वेदार्थदीपिका च ।
(ख) भारद्वाजा इति ग० ।
(ग) धिष्ण्यादेव इति ग० ख० ।

# अथ दशमं मण्डलम् ।

अग्ने बृहन्निति(१)वितद्दशम मण्डल मुनि ।
क्षुद्रसूक्ता महासूक्ता विज्ञेया ऋषयस्त्विति ॥१॥
मण्डलादिमुपक्रम्य सप्तसूक्तेष्वत पर ।
आप्त्यस्त्रितो मुनिस्तावस्त्रिशिरा सूक्तयोर्द्वयो ॥२॥
प्रकेतुने(८)ति तत्रापि यत्सूक्तद्वयमन्तयो ।
अम्बरीषसुतस्तत्र सिन्धुद्वीपोऽथवा मुनि ॥३॥
ओ चि(१०)त्सूक्तेष्वयुक्ष्वेषु षष्ठ्या सह मुनिर्यमी ।
वैवस्वतो यमो नाम नवम्या सह युक्षु तु ॥४॥
हृपा(११)द्यावा(१२)युजे(१३)त्येषा सूक्तानां त्रितय प्रति ।
आङ्गि(क) र्नाम हविर्धानो मुनिरित्यवगम्यताम् ॥५॥
एतेषामुत्तरे सूक्ते विवस्वानदिते सुत ।
परेयिवास(१४)सूक्तस्य यमो वैवस्वतो मुनि ॥६॥
उदीरतामुपक्रम्य पञ्चसूक्तान्यत परम् ।
यमपुत्रा विदुस्तेषामु(१५)च्छङ्खो दमनस्तु मा(१६) ॥७॥
एको देवश्रवास्त्वष्टा(१७)पर सङ्कुसुक परम्(१८) ।
मथितस्तु नि वर्तध्व(१९) मस्मिन सूक्ते मुनि पुन ॥८॥
भृगुवा वारुणिर्विद्याद्भार्गवश्च्यवनोऽथवा ।
भद्र(२०)मित्यादिसूक्ताना सप्ताना विमदो मुनि ॥९॥

(क) आङ्गिरित्यत्र आङ्गिरस इति अनुक्रमणिकाविवरणम् ।

प्राजापत्यः स ऐन्द्रो वा वसुक्रद्वा वसुक्रजः ।
ऋषिर्वसुक्र ऐन्द्रीयस्त्रिषु सूक्तेष्वसत्त्वि(२०)ति ॥१०॥
तन्मध्यसूक्ते विश्वो हि(२८) प्रथमाया ऋचो मुनिः ।
इन्द्रस्नुषा वसुक्रस्य पत्न्येवेन्द्रो युजामृचाम् ॥११॥
चतुर्थ्या सह शिष्टानां वसुक्रस्त्वयुजामृचाम् ।
प्र देवत्रे(२०)ति सूक्तानां पञ्चानां कवषो मुनिः ॥१२॥
ऐलूषो मौजवान् वाचः प्रावेपा मे(२४)ति चोत्तरे ।
लुशो मुनिः स धानाकस्त्वबुध्र(२५)मितिसूक्तयोः ॥१३॥
नमो मित्रस्य(२७) सूक्तस्य सूर्य्यजोऽभितपा मुनिः ।
अग्निर(२८)इति सूक्तस्य ऋषिरैन्द्र[क]स्तु मुष्कवान् ॥१४॥
यो वां परिज्मा(२९)सूक्तस्य रथ(४०)मित्युत्तरस्य च ।
कक्षीवतः सुता घोषा ह्यृषिकेत्यच कीर्त्तिता ॥१५॥
समानमु त्यं(४१)[ख] घौषेयः सुहस्त्यो नाम वा ऋषिः ।
अस्तेवे(४२)ति त्रिसूक्तानां कृष्ण आङ्गिरसो मुनिः ॥१६॥
दिवस्परि(४५)प्र होते(४६)ति सूक्तयोरनयोस्तृषिः ।
भालन्दनस्तु वत्सप्रि[ग]र्जगृभ्मे(४७)त्युत्तरस्य तु ॥१७॥
सप्तगुर्नाम विज्ञेयो मुनिरङ्गिरसः सुतः ।
अहम्भुव(४८) मुपक्रम्य सूक्तानां त्रितयं प्रति ॥१८॥

---

(क) इन्द्र इति सर्व्वानुक्रमणी, ऋनुक्रमणिकाविवरणञ्च ।

(ख), समानमु त्यं इति स० च० ज० ।

(ग) वत्सप्रीरिति सर्व्वानुक्रमणी । वत्सः प्रिय इति ऋनुक्रमणिकाविवरणम् ।

ऋषिरिन्द्रस्तु वैकुण्ठो मरुत्त(४१)दिति तु त्रिषु ।
देवानामग्निना सार्कं संवादः क्रियतेऽत्र तु ॥१८॥
यमैच्छाम(५१)ति सूक्तेऽस्मिन् देवा ऋषय उत्तरे ।
विश्वे देवा(५१)इति त्वग्निन् सौचीकोऽग्निस्तृषिः स्मृतः॥२०॥
महत्त(५१)दिति पूर्वे तु देवा एवायुजामृचाम् ।
युजां त्वग्निः स सौचीकस्तदये(५१,४)ति तृचस्य च ॥२१॥
तां सु ते कीर्त्ति(५४)मित्यादिसूक्तानां त्रितयं प्रति ।
बृहदुक्थो वामदेव्य ऋषिरित्यवगम्यताम् ॥२२॥
मा प्र गामे(५७)त्युपक्रम्य चतुःसूक्तेष्वतः परम् ।
बन्ध्वाद्या[क] ऋषयो ज्ञेया गोपायनसुतास्त्रयः ॥२३॥
स्वसागस्त्यस्य[ख] मातैषामगस्त्यस्ये(६०,६)त्यृचो मुनिः ।
इदमित्थे(६१)ति सूक्तस्य ये यज्ञेनो(६२)त्तरस्य च ॥२४॥
नाभानेदिष्ठनामायमृषिर्ज्ञेयः स मानवः॥२५॥
गय. प्लातो मुनिर्विद्यात्परावत(६३) इति द्वयोः ।
वासुको वसुकर्णोऽयमग्निरिन्द्र(६५) इति द्वयोः ॥२६॥
अयास्यनामाङ्गिरस इमान्धिय(६७)मिति द्वयोः ।
वाध्र्यश्वस्तु सुमित्रोऽयं भद्रा अग्ने(६९)रिति द्वयोः॥२७॥
बृहस्पतिस्त्वाङ्गिरसो बृहस्पत(७१) इति द्वयोः ।

---

(क) गौपायना लौपायना वा बन्धु सुबन्धु श्रुतबन्धुर्विप्रबन्धुश्चेति अनुक्रमणिकाविवरणम्। वेदार्थदीपिकायान्तु, अत्रैषां लौपायनत्वं न कर्त्तव्यम्। अपि तु गौपायनत्वमेवेति वाक्यमुक्तम्। * * * अस्य मतस्य सुबन्धोर्भ्रातरस्त्रयो बन्धुश्रुतबन्धुविप्रबन्धव इति दृश्यते।

(ख) बन्ध्वादीनां माता अगस्त्यस्य स्वसा इति अनुक्रमणिकाविवरणम्।

अनयोरुत्तरे सूक्ते लौक्यो[क]वा स बृहस्पतिः ॥२८॥
अदितिर्वा दक्षपुत्री मुनिरित्यवगम्यताम् ।
ऋषिः शाक्यो गौरिवीतिर्जनिष्ठा(७३) इति सूक्तयोः ॥२९॥
सिन्धुक्षित्प्रैयमेधो[ख]ऽयं प्र सु वः(७५) सूक्त उत्तरे ।
ऐरावतो जरत्कर्ण आ व ऋञ्जस(७६) उत्तरे ॥३०॥
भृगुपुत्रः स्यूमरश्मिरभ्रप्रुष(७७) इति द्वयोः ।
अग्निर्वैश्वानरो वायं स सौचीकोऽग्निरेव वा ॥३१॥
सप्तिर्वाजम्भरो वायमपश्य(७९)मिति सूक्तयोः ।
भौवनो विश्वकर्मायं य इमे(८१)त्यादिसूक्तयोः ॥३२॥
ऋषिस्तु तापसो मन्युर्यस्ते मन्य(८३)विति द्वयोः ।
सत्येनोत्तभिता(८५)सूक्तं सूर्या सावित्रीत्यार्षं तत् ॥३३॥
वि ही(८६)ति सूक्तमिन्द्राण्या इन्द्रस्य च वृषाकपेः ।
वि हि सोतोः(८६,१)[ग]किं सुबाह(८६,८) विन्द्राणी (८६,११) नाह(८६,१२)मित्यृचां ॥३४॥
अयमेमी(८६,१९)ति चारभ्य तथा चतसृणामृचाम् ।
उक्ष्णो ही(८६,१४)त्यनया सार्कं नवानामिन्द्र एव दृक् ॥३५॥
उवे अम्ब सुलाभिके(८६,७) वृषाकपायि रेवति(८६,१३) ।
पर्शुर्ह(८६,२३)ति तिसृणां च ऋषिरैन्द्रो वृषाकपिः ॥३६॥
एकादशानां शिष्टानामिन्द्राणी सा पुलोमजा ।

---

(क) लौक्य इति सर्व्वानुक्रमणी ।
(ख) प्रयमेध इति अनुक्रमणिकाविवरणम् ।
(ग) वि हि सोतो(८६,१)रित्यादिविशेषकथनं सर्व्वानुक्रमण्यनुक्रमणिकाविवरणयोर्न दृश्यते । वेदार्थदीपिका तु यथायथमाह स्म ।

पायूरचोहणे(८७)[क] सूक्ते भरद्वाजसुतो मुनिः ॥३७॥
हविष्यान्तस्य(८८)[ख] सूक्तस्य मूर्द्धन्वान्नाम दर्शितः[ग] ।
अयन्त्वङ्गिरसः पुत्त्रो वामदेव्योऽथवा पुनः ॥३८॥
विश्वामित्रसुतो रेणुः सूक्तस्येन्द्रं स्तवे(८९)त्यृषिः ।
सहस्रशीर्षा(९०) सूक्तस्य ऋषिर्नारायणः स्मृतः ॥३९॥
सञ्जागृवद्भि(९१)रित्यस्मिन् वैतहव्योऽरुणो मुनिः ।
यज्ञस्ये(९२)त्यस्य सूक्तस्य शार्य्यातो नाम मानवः ॥४०॥
मह्नि द्यावे(९३)ति सूक्तस्य पार्थ्य[घ]स्तान्व ऋषिः स्मृतः ।
प्रैते(९४) सूक्तस्य सर्पोऽयं काद्रवेयोऽर्बुदो मुनिः ॥४१॥
उर्व्वशी च ह्ये(९५) सूक्ते मुनिरैलः पुरूरवाः ।
ऐलस्य वाक्यमेताः प्रथमाद्य चतुर्द्दशी ॥४२॥
तृतीया द्वादशी षष्ठी सप्तदशा सदेति षट् ।
ऋचा य(९५,८)दिति तिस्रश्च उर्व्वश्या उत्तरा नव ॥४३॥
प्र ते महे(९६) इति तस्य बरुरङ्गिरसः सुतः ।
ऐन्द्रः सर्व्वहरिर्वायमृषिरित्यवगम्यताम् ॥४४॥
या ओषधी(९७)[ङ]स्तु सूक्तस्य ऋषिराथर्व्वणो भिषक् ।
आर्ष्टिषेणस्तु देवापिर्मुनिः सूक्ते बृहस्पते(९८) ॥४५॥

(क) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च रक्षोहणमिति पाठो वर्त्तते ।
(ख) मोक्षमूलरसम्पादितऋग्वेदे हविष्यान्तमिति पाठोऽस्ति ।
(ग) दर्शक इति पाठः सम्भवितुमर्हति ।
(घ) पार्थ इति सर्व्वानुक्रमणी ।
(ङ) ओषधीरिति म० ऋ० ।

कं नः (९९)सूक्तस्य वम्रस्तु वैखानस ऋषिः स्मृतः।
इन्द्र दृह्ये(१००)ति सूक्तस्य दुवस्युर्नाम वान्दनः ॥४६॥
उद्बुध्यध्वं(१०१) बुधः सौम्यो भार्म्यश्वो मुद्गलः प्र ते(१०२)।
आशुः शिशानः(१०३)सूक्तेऽस्मिन्नैन्द्रोऽप्रतिरथो मुनिः॥४७॥
असावि सोम(१०४) इत्यस्य वैश्वामित्रोऽष्टकस्त्वृषिः।
कदा(१०५) सूक्ते सुमित्रो वा दुर्मित्रो वा स कुत्सजः॥४८॥
उभा उ(१०६)सूक्ते भूतांशः काश्यपस्य सुतो मुनिः।
आविः (१०७)सूक्तस्य चैतस्य दिव्यो वाङ्गिरसः स्वयम्॥४९॥
प्राजापत्या दक्षिणा वा त्वृषिरित्यवगम्यताम्।
किमिच्छन्ती(१०८)ति सूक्तस्य युजामासाम्त्वाम्त्वृषिः॥५०॥
अन्यायाश्च शुनी नाम सरमा पणयो(क)ऽयुजाम्।
तेऽवद(१०९)न्निति सूक्तस्य ब्रह्मजाया जुहूर्मुनिः ॥५१॥
अथवोर्ध्वनाभा नाम ब्रह्मपुत्र ऋषिः स्मृतः।
समिद्धो अद्य(११०) सूक्तस्य जमदग्निर्भृगोः सुतः ॥५२॥
रामस्तु जामदग्न्यो वा मुनिरित्यवगम्यताम्।
परे चत्वारि सूक्तानि वैरूपा ऋषयो विदुः ॥५३॥
अष्टादंष्ट्रो मुनिस्तत्र सूक्तस्यास्य मनीषिणः(१११)।
नभःप्रभेदनः(ख) सूक्ते परे त्विन्द्र पिबे(११२)त्यृषिः ॥५४॥
शतप्रभेदनः(ग)सूक्ते तमस्ये(११३)ति तदुत्तरे।

---

(क) पणय इत्यत्र असुरा इति अनुक्रमणिकाविवरणे प्रख्वे।

(ख) नभ प्रवेदन इति अनुक्रमणिकाविवरणम्।

(ग) प्रप्रभेदनः इति घ० च०।

घर्म(११७)ति सूक्ते सप्रिर्न्तु घर्मो वा तत्र तापसः ॥५ ५॥
चित्र इच्छिग्रोः (११५)सूक्तस्य वार्ष्टिहव्य उपस्तुतः ।
पिबा सोम(११६)मिति तस्मिन् स्यौरो वाग्नियुतो मुनिः ॥५ ६॥
अग्नियूपोऽथवा स्यौरो मुनिरित्यवगम्यताम् ।
न वा उ देवाः(११७) सूक्तस्य भिक्षुराङ्गिरसः सुतः ॥५ ७॥
अमहीयुसुतः सूक्तस्याग्ने हंसी(११८)त्युरुक्षयः ।
इति वा(११९) इति सूक्तस्य मुनिरिन्द्रसुतो लवः ॥५ ८॥
अथर्वणः सुतः सूक्ते तदिदास(१२०) इद्दद्दिवः ।
हिरण्यगर्भः सं(१२१) सूक्ते[क] प्रजापतिसुतो मुनिः ॥५ ९॥
वसुं न(१२२)सूक्ते वासिष्ठो नाम्ना चित्रमहा ऋषिः ।
अयं वेन(१२३)श्च सूक्तस्य वेनो नाम भृगोः सुतः ॥६ ०॥
इमं न(१२४) इति सूक्तेऽस्मिन्निन्द्रः स्वयमृषिः स्मृतः ।
अदेवाद्देव(१२४,१) इत्यादि तिसृणामग्निरत्र तु ॥६ १॥
अहं रुद्रेभि(१२५)रित्यस्मिन्नाम्भृणी नाम वागृषिः ।
न तमंहो न(१२६) शैलूषिः[ख] सूक्ते कुल्मलबर्हिषः[ग] ॥६ २॥
अंहोमुग्वामदेव्यो वा ऋषिरित्यवगम्यताम् ।
रात्री व्यख्य(१२७)दिति तस्मिन् सौभरः कुशिको[घ] मुनिः॥६ ३॥

---

(क) तत्सूक्ते इति घ॰ च॰ ज॰ ।

(ख) शैलोश्निरिति घ॰, शैलोष्यिगिति ज॰ ।

(ग) कुल्मवबर्हिष इति ज॰ । कुल्मुणबर्हिष इति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(घ) कुशिकः इति घ॰ ।

भरद्वाजसुता रात्रिरथवा गम्यतामृषिः।
ममाग्न(१२८) इति सूक्तस्य विहव्योऽङ्गिरसः सुतः॥६४॥
नाम(१२९)सूक्ते मुनिर्ज्ञेयः परमेष्ठी प्रजापतिः।
यो यज्ञः(१३०) सूक्ते(क) यज्ञस्तु प्राजापत्य ऋषिः स्मृतः॥६५॥
काक्षीवतः सुकीर्तिस्तु सूक्तेऽप प्राच(१३१) उत्तरे।
ईजानं(१३२) सूक्ते नार्मेधः शकपूत ऋषिः स्मृतः॥६६॥
प्रो ष्वस्मा(१३३) इति सूक्तस्य सुदाः पैजवनो मुनिः।
यौवनाश्वस्तु मान्धाता सूक्तस्योभे य(१३४)दित्यृषिः॥६७॥
इहोत्तमामथाध्यर्द्धां(१३४,०) गोधा नारी ददर्श ह।
यस्मिन्(१३५) सूक्ते कुमारोऽयमृषिर्यामायनः स्वयम्॥६८॥
मुनयो वातरशना एकर्चाः सप्त केशिनः(१३६)।
जूतिश्च वातजूतिश्च विप्रजूतिर्वृषाणकः॥६९॥
करिक्रतैतशौ च द्वावृष्यशृङ्गश्च सप्तमः।
उत(१३७) सूक्तं सप्तर्षय(ख) एकर्चा एव ते विदुः॥७०॥
तव त्य(१३८) इति सूक्तस्य अङ्गस्तूर्पिहरोः सुतः।
विश्वावसुः सूर्य(१३९) सूक्ते मुनिर्गन्धर्व एव सः॥७१॥
अग्ने तवे(१४०)ति सूक्तस्य मुनिरग्निस्तु पावकः।
अग्ने अच्छे(१४१)ति सूक्तस्य मुनिरग्निस्तु तापसः॥७२॥
अयं(१४२) सूक्ते द्रुचाः शार्ङ्गा जरिता द्रोण उत्तरः।
सारिसृक्कः स्तम्बमित्रस्त एते पक्षिणो विदुः॥७३॥

---

(क) यो यज्ञ इति घ० ध० म०।
(ख) भरद्वाजादयः सप्त २८६ पृष्ठतोऽवगन्तव्याः।

थं चि(१४२)सूक्तस्य शार्ङ्गोऽभिरय(१४४)मित्युत्तरस्य तु।
तार्क्ष्यपुत्रः सुपर्णो वा मुनिर्यामायनोऽथवा ॥७४॥
स ऊर्ध्वकृशनो ज्ञेय इन्द्राणीमां खनाम्य(१४५)पि।
ऐरम्मदो देवमुनिररण्यानी(१४६)त्यृषिः स्मृतः ॥७५॥
सुवेदा नाम शैरीषिः(क) श्रत्ते(१४७) सूक्ते मुनिः स्मृतः।
सुन्वाणास(१४८)स्तु॰सूक्तस्य वैन्यो नाम पृथुर्मुनिः ॥७६॥
सविता(१४९) सूक्तस्य चार्चन्(ख) हैरण्यस्तूप एव सः।
मृळीको नाम वासिष्ठः समिद्धश्चि(१५०)दितीत्यृषिः ॥७७॥
श्रद्धयाग्नि(१५१)रिति तस्य श्रद्धा कामायनी मुनिः।
भरद्वाजसुतः शासः शास इत्थे(१५२)त्यृषिः स्मृतः ॥७८॥
इन्द्रस्य मातरो यास्ता ऋषयो देवजामयः।
ईङ्खयन्ती(१५३)रिति तस्य सोमो(१५४) वैवस्वती यमी ॥७९॥
अराधि(१५५) सूक्तेऽयमृषिर्भारद्वाजः शिरिम्बिठः(ग)।
अग्निं हिन्वन्तु नः(१५६) सूक्ते केतुरग्निसुतो मुनि. ॥८०॥
इमा नु(१५७) भुवन आप्त्यः साधनो भौवनोऽथवा।
सूर्यो न(१५८) इति सूक्तस्य सौर्यश्चक्षुरृषिः स्मृतः ॥८१॥
उदसौ(१५९) तस्य पौलोमी शची नाम मुनिः स्मृतः।
त्वमिस्तोमस्य(१६०) सूक्तस्य वैश्वामित्रस्तु पूरणः ॥८२॥
प्राजापत्यस्तु सुज्ञामी(१६१)त्यपयक्षघ्नमनाशनः।

---

(क) शैलूषिरिति घ॰ च॰ ज॰। अनुक्रमणिकाविवरणश्च।
(ख) चार्चन्त इति घ॰ च॰ ज॰।
(ग) शिरिम्बिठ इति सर्व्वानुक्रमणी।

रक्षोहायमृषिर्ब्राह्मो ब्रह्मणाग्नि(१६२)रसुंय्य तु ॥८३॥
अक्षीभ्या(१६३)मिति सूक्तस्य काश्यपो विवृहा मुनिः ।
प्रचेतास्तु जगौ सूक्तमपेहो(१६४)त्यङ्गिरःसुतः ॥८४॥
देवाः कपोतः(१६५) सूक्तस्य कपोतो नैर्ऋतस्त्वृषिः ।
ऋषभं मे(१६६)ति सूक्तस्य वैराज ऋषभो मुनिः ॥८५॥
शाक्वरो वा स ऋषभस्तुभ्येद(१६७)मिति त्वृत्तरे ।
विश्वामित्रजमदग्नी ऋषिर्गाथिनभार्गवौ ॥८६॥
वातायनो मुनिः सूक्तं वातस्ये(१६८)त्यनिलो जगौ ।
मयोभूः(१६९) शबरः सूक्तं काक्षीवत ऋषिर्जगौ ॥८७॥
विभ्राड्(१७०)सूक्तमिदं सौर्यो नाम्ना विभ्राडृषिर्जगौ ।
इटतो[क] भार्गवः सूक्तं त्वन्यमिटतो(१७१) जगौ ॥८८॥
त्रीण्युत्तराणि सूक्तानि विदुरङ्गिरसस्त्रयः ।
आयाह्या(१७२)त्वा(१७३)भि(१७४)संवर्त्तो ध्रुवोऽभीवर्त्त इत्यमी॥८९॥
प्र वो ग्रावाण(१७५) इत्यस्मिन्नूर्ध्वग्रावार्बुदिर्मुनिः ।
प्र सूनव(१७६) इति तस्य सूनुर्नामार्भवो मुनिः ॥९०॥
प्राजापत्यः पतङ्गोऽयं पतङ्गं(१७७) सूक्तमुक्तवान् ।
अरिष्टनेमिस्तार्क्ष्योऽयं जगौ सूक्तं त्यमूष्वि(१७८)ति ॥९१॥
उत्तिष्ठते(१७९)ति चैकर्चाः सूक्तमेतत्त्रयो विदुः ।
शिबिरौशीनरः पूर्वः काशिराजः प्रतर्दनः ॥९२॥
रौहिदश्वो वसुमना इत्येत ऋषयः क्रमात् ।

---

(क) इटत इत्यत्र प्रथमायास्तसिल् ।

प्र ससाहिष(१८०)(क) इत्यभिभिन्द्रपुत्त ऋषिर्जयः ॥८३॥
प्रथो नाम स वासिष्ठो भारद्वाजश्च सप्रथः।
घर्मः सौर्यस्त एकर्चाः प्रथः(१८१) सूक्ते इमे विदुः ॥८४॥
बार्हस्पत्यस्तपुर्मूर्धा मुनिः सूक्ते बृहस्पतिः(ख)(१८२)।
प्राजापत्यश्च सूक्तन्तदपश्यन्वा(१८३) प्रजावतः ॥८५॥
विष्णुर्योनि(१८४)मिति लक्षिंस्त्वष्टा वा गर्भकृन्मुनिः।
प्राजापत्योऽथवा विष्णुर्नेजमेषस्तदुत्तरे ॥८६॥
ऋषिः सत्यधृतिर्नाम महि(१८५) सूक्ते स वारुणिः।
वात आ वातु(१८६) सूक्तस्य प्र नून(१८८)मिति(ग) तस्य च ॥८७॥
वत्सः श्येनश्च तावेतावग्निपुत्त्रावृषी पृथक्।
आयङ्गौ(१८९)रिति सूक्तस्य सार्पराज्ञी मुनिः स्मृतः(घ) ॥८८॥
मधुच्छन्दःसुतः सूक्त ऋत(१९०)मित्यघमर्षणः।
संसं(१९१) सूक्ते संवनन ऋषिरङ्गिरसः सुतः ८९॥

---

(क) मोक्षमूलरसम्पादितऋग्वेदे प्र ससाहिषे इति पाठो विद्यते।

(ख) बृहस्पताविति घ० च० ञ०।

(ग) आर्षानुक्रमण्या, वात आ वातु, प्र नूनमिति सूक्तद्वयस्य वत्सः श्येनश्च इमौ द्वावृषी क्रमेण प्रदर्शितौ। प्राग्नये (१८७) इति सूक्तस्य ऋषिर्न प्रदर्शितः। सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च, वात आ वातु इति सूक्तस्य वातायन उल ऋषिरभिहितः। प्राग्नये इति सूक्तस्य आग्नेयो वत्स [illegible] सूक्तस्य चाग्नेयः श्येन ऋषिर्निर्दिष्टः।

(घ) स्मृतेति घ०।

गोधा घोषा विश्ववारा पालोपनिषन्निषत् ।
ब्रह्मजाया जुहूर्नाम अगस्त्यस्य स्वसादितिः ॥१००॥
इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी ।
लोपामुद्रा च नद्यश्च यमी नारी च शश्वती ॥१०१॥
श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः ।
स गौतमो[क] वामदेवो यः खिलास्ता ऋचो जगौ ॥१०२॥

यैर्वेदमन्त्राः सकलाः सुदृष्टा
येनार्षानुक्रमणी प्रदिष्टा ।
नमोऽस्तु तेभ्यो मुनिपुङ्गवेभ्यो
भवन्तु ते चापि मयि प्रसन्नाः ॥१०३॥

इति दशमं मण्डलम् ॥

इति शौनकाचार्यकृतार्षानुक्रमणी समाप्ता ॥

---

(क) स गोतम इति ज० ।

# अथ छन्दोऽनुक्रमणी।

## प्रथमं मण्डलम्।

ऋग्वेदगतसूक्तानां सूक्तस्थानामृचामपि।
यानि छन्दांसि विद्यन्ते तानि वक्ष्यामि सम्प्रति ॥१॥
गायत्रं नव सूक्तानि मधुच्छन्दस आदितः।
आनुष्टुभे परे ज्ञेये दशमैकादशे उभे ॥२॥
मेधातिथेस्तु सूक्तेषु गायत्रेषूत्तरे स्थिति।
पुरउष्णिक्(क) परानुष्टुप्(ख)(१)तिस्रस्त्वान्त्या(ग) अनुष्टुभः ॥३॥
शुनःशेपस्य सूक्तानि गायत्राण्येव तत्र तु।
त्रिष्टुभौ प्रथमस्याद्ये(घ) षष्ठ्याद्या(ङ)श्च तथा दश ॥४॥
उत्तमा(च) च चतुर्थस्य षोडशी(छ) चोत्तमस्य या।
षष्ठन्तु पाङ्क्त(ज)माद्यास्तु पञ्चमे षड(झ)नुष्टुभः ॥५॥
ऋगस्माकं शिशिरिणीना(ञ)मेषा पादनिचृन्मता।

---

(१) सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च सूक्तस्यास्य एकविंशसङ्ख्याकाया ऋचश्छन्दः प्रतिष्ठेत्युक्तम्।

---

(क) सू० २३, ऋ० १९। (ख) सू० २३, ऋ० २०। (ग) सू० २३, ऋ० २२, २३, २४। (घ) सू० २४, ऋ० १, २। (ङ) सू० २४, ऋ० ६, ७, ८, ९, १०, ११, १२, १३, १४, १५। (च) सू० २७, ऋ० १३। (छ) सू० ३०, ऋ० १६। (ज) सू० २९। (झ) सू० २८, ऋ० १, २, ३, ४, ५, ६। (ञ) सू० ३०, ऋ० ११।

हिरण्यस्तूपसूक्तानि त्रैष्टुभान्यथ तत्र तु ॥६॥
प्रथमस्य चतुर्थस्य जागते(क) प्रथमे तयोः ।
अष्टमी षोडशी चान्त्या(ख) त्रिष्टुभश्चरमे पुनः ॥७॥
अन्त्या च नवमी(ग) चापि त्रिष्टुभावेव गम्यताम् ।
उत्तमे तु जगत्याद्या(घ) नवमी(ङ) जगतीनिवृत् ॥८॥
कण्वस्य प्रथमं(च) सूक्तं चतुर्थं(छ) पञ्चमं(ज) च यत् ।
प्रस्कण्वस्य च तान्ये(झ)व प्रगाथा बार्हता तृचाः ॥९॥
प्रस्कण्वस्य द्वितीय(ञ)स्य षष्ठ(ट)स्यानुष्टुभे उभे ।
चतस्रश्चोत्तमस्यान्त्याः(ठ) कण्वस्यानुष्टुबुत्तमा(ड) ॥१०॥
सर्वा गायत्र्य एवान्याः कण्वप्रस्कण्वयोर्ऋचः ।
सव्यस्य सप्त सूक्तानि(ढ) जागतान्येव तत्र तु ॥११॥
प्रथमस्य तृतीयस्य तृचोऽन्त्य(ण)स्त्रैष्टुभः स्मृतः ।
त्वमाविथा(त)समं चर्चं(थ) तुभ्येदेते(द) सः प्रेष्ठम्(ध) ॥१२॥
त्वं भुव(न)स्त्रिष्टुभश्चैता आर्चन्नत्रे(प)तृचा सह ।

---

(क) सू० ३१, ३४ । (ख) सू० ३१, ऋ० ८, १६, १८ । (ग) सू० ३४, ऋ० ९, १२ । (घ) सू० ३५, ऋ० १ । (ङ) सू० ३५, ऋ० ९ । (च) सू० ३६ । (छ) सू० ३९ । (ज) सू० ४० । (झ) सू० ४४, ४७, ४८ । (ञ) सू० ४५ । (ट) सू० ४९ । (ठ) सू० ५०, ऋ० १०, ११, १२, १३ । (ड) सू० ४३, ऋ० ९ । (ढ) सू० ५१, ५२, ५३, ५४, ५५, ५६, ५७ । (ण) सू० ५१, ऋ० १४, १५; सू० ५३, १०, ११ । (त) सू० ५४, ऋ० ६ । (थ) सू० ५४, ऋ० ८ । (द) सू० ५४, ऋ० ९ । (ध) सू० ५४, ऋ० ११ । (न) सू० ५२, ऋ० १३ । (प) सू० ५२, ऋ० १५ ।

नोधसः प्रथमाः पञ्च[क] जगत्यस्त्रिष्टुभः पराः[ख] ॥१३॥
सर्वा उपोत्तमाः[ग] सूक्ता जागतं सूक्तमुत्तमम्[घ] ।
अस्यापि चोत्तमा ज्ञेया त्रिष्टुबेवेति तु स्थिरम्[ङ] ॥१४॥
पराशरस्य द्विपदा आषष्ठा[च]स्त्रिष्टुभः पराः[छ] ।
गौतमस्य तु सूक्तेषु द्वे पाङ्क्तौ सप्तमाष्टमौ[ज] ॥१५॥
नवमं च जगत्यन्तं[झ] दशम[ञ]न्त्वथ जागतम् ।
प्रथम[ट]श्च द्वितीय[ठ]श्च गायत्रं पञ्चम[ड]न्त्विदम् ॥१६॥
तृतीय[ढ]श्च चतुर्थ[ण]श्च त्रैष्टुभे त्रैष्टुभौष्णिहौ ।
षष्ठस्याद्ये तृचौ ज्ञेयौ शिष्टा गायत्र्यः पराः[त] १७॥
एकादशस्य सूक्तस्य पूर्वावानुष्टुभौ तृचौ[थ] ।
औष्णिहास्तु[द] पराः पाङ्क्त[ध] गायत्र[न] त्रैष्टुभा[प]स्तृचाः ॥१८॥
विज्ञेयस्ततो बार्हतः प्रागाथस्तूत्तमो[फ] तृचः ।
द्वादशं[ब] जागतं सूक्तं त्रिष्टुबन्त्या च पञ्चमी[भ] ॥१९॥

---

(क) सू० ५८, ऋ० १, २, ३, ४, ५। (ख) सू० ५८, ऋ० ६, ७, ८, ९। (ग) सू० ५९, ६०, ६१, ६२, ६३। (घ) सू० ६४। (ङ) सू० ६४, ऋ० १५। (च) सू० ६५, ६६, ६७, ६८, ६९, ७०। (छ) सू० ७१, ७२, ७३। (ज) सू० ८०, ८१। (झ) सू० ८२, ऋ० ६। (ञ) सू० ८६। (ट) सू० ७४। (ठ) सू० ७५। (ड) सू० ७८। (ढ) सू० ७६। (ण) सू० ७७। (त) सू० ७९, ऋ० १, २, ३। ४, ५, ६। ७, ८, ९। (थ) सू० ८४, ऋ० १, २, ३, ४, ५, ६। (द) सू० ८४, ऋ० ७, ८, ९। (ध) सू० ८४, ऋ० १०, ११, १२। (न) सू० ८४, ऋ० १३, १४, १५। (प) सू० ८४, ऋ० १६, १७, १८। (फ) सू० ८४, ऋ० १९, २०। (ब) सू० ८५। (भ) सू० ८५, ऋ० ५, १२।

त्रयोदशस्य[क] गायत्रं जागतं तदनन्तरम्[ख] ।
प्रस्तारपङ्क्ती आद्यन्ते[ग] आ विद्युन्मद्भिरस्य तु ॥२०॥
त्रिष्टुभस्तु द्वितीयाद्या[घ] विराड्रूपा तु पञ्चमी[ङ] ।
षोडशं जागतं[च] तस्य द्व्यचान्त्य[छ]स्त्रैष्टुभः स्मृतः ॥२१॥
षष्ठी[ज]लेका विराट्स्थाना सा च स्वस्ति न इत्यसौ ।
ऋजुनीती[झ]ति गायत्र्यन्त्यस्यैकानुष्टुबुत्तमा[ञ] ॥२२॥
पराणि[ट]त्रैष्टुभान्येव तत्रापि प्रथमे पुनः ।
त्व सोमासी[ठ]ति गायत्र्यो द्वादशोष्णिक्ततः परा[ड] ॥२३॥
चतु[ढ]र्जगत्यः प्रथमा उपान्त्यान्त्याः[ण] षडुष्णिहः ।
उत्तमस्य तु सूक्तस्य तिस्रोऽ[त]नुष्टुभ आदितः ॥२४॥
नवमीप्रभृति[थ]स्तस्य गायत्र्योऽस्य परस्तृचः ।
कुत्ससूक्तेषु गायत्रं चतुर्थं[द] त्रैष्टुभेष्वथ ॥२५॥
पाङ्क्तं द्वादशमं[ध] सूक्तमुद्धृत्यान्त्यान्तथाष्टमीम् ।
महाबृहत्यष्टमी[न] सा यवमध्या च योद्धृता ॥२६॥

---

(क) सू० ८६ । (ख) सू० ८७ । (ग) सू० ८८, ऋ० १, ६ । (घ) सू० ८८, ऋ० २, ३, ४ । (ङ) सू० ८८, ऋ० ५ । (च) सू० ८९ । (छ) ८९, ऋ० ८, ९, १० । (ज) सू० ८९, ऋ० ६ । (झ) सू० ९० । (ञ) सू० ९०, ऋ० ९ । (ट) सू० ९१, ९२, ९३ । (ठ) सू० ९१, ऋ० ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६ । (ड) सू० ९१, ऋ० १७ । (ढ) सू० ९१, ऋ० १, २, ३, ४ । (ण) सू० ९१, ऋ० १८, १९, २०, २१, २२, २३ । (त) सू० ९३, ऋ० १, २, ३ । (थ) सू० ९३, ऋ० ९, १०, ११ । (द) सू० ९७ । (ध) सू० १०५ । (न) सू० १०५, ऋ० ८ ।

प्रथम[क]श्चैकविंश[ख]श्च नवम[ग]श्चाष्टमं[घ] ततः ।
ऊर्ध्व[ङ]श्च षोडश चौष्णि[च] सप्तर्चश्च त्रयोदशम्[छ] ॥२७॥
एतानि जागतान्येषु प्रथमेऽन्यं तृचं[ज] विना ।
एकोनविंशे[झ] चैकविंशे[ञ] तथैवान्यं तृचं विना ॥२८॥
त्र्यृचं त्रयोदशे[ट] त्वन्यां नवमे[ठ]ऽष्टादशे[ड] विना ।
ततं मे पञ्चमीं चान्या[ढ]मष्टमेऽन्यौ तृचौ[ण] विना ॥२९॥
कक्षीवतस्तु सूक्तेषु चतुर्थं[त] तस्य जागतम् ।
उपोत्तमस्य चर्चौ द्वे चतुर्थी पञ्चमी[थ] च या ॥३०॥
पञ्चमस्य तु गायत्र्यस्तिस्रोऽन्याः प्रथमा[द] च या ।
अनुष्टुभौ विराजौ वा नवमी चाष्टमी[ध] च या ॥३१॥
अनुष्टुप्तु चतुर्थी[न] च सप्तमी[प] वृहती विराट् ।
तृतीया पञ्चमी षष्ठी द्वितीया[फ] चोष्णिहाक्षरैः ॥३२॥
गायत्री वा द्वितीया[ब]स्य तृतीया[भ] तुष्टुबेव वा ।

---

(क) सू० ९४ । (ख) सू० ११४ । (ग) सू० १०२ । (घ) सू० १०१ । (ङ) सू० ११४ । (च) सू० ११०, १११, ११९ । (छ) सू० १०६ । (ज) सू० ९७, ऋ० १५, १६ । (झ) सू० ११३, ऋ० १९, २० । (ञ) सू० ११५, ऋ० १०, ११ । (ट) सू० १०६, ऋ० ७ । (ठ) सू० १०२, ऋ० ११ । (ड) सू० १११, ऋ० ५ । (ढ) सू० ११०, ऋ० ५, ९ । (ण) सू० १०१, ऋ० ८, ९, १०, ११ । (त) सू० ११९ । (थ) सू० १२५, ऋ० ४, ५ । (द) १२०, ऋ० १, १०, ११, १२ । (ध) सू० १२०, ऋ० ८, ९ । (न) १२०, ऋ० ४ । (प) सू० १२०, ऋ० ७ । (फ) सू० १२०, ऋ० २, ३, ५, ६ । (ब) सू० १२०, ऋ० ३ । (भ) सू० १००, ऋ० ४ ।

सप्तमस्य विराड्रूपे श्रुतं मे[क] आव[ख] इत्यृचौ ॥२३॥
उत्तमस्य तु सूक्तस्य द्वे वाय्वन्त्ये[ग] अनुष्टुभौ ।
अवशिष्टानि सूक्तानि[घ] त्रैष्टुभान्यवगम्यताम् ॥२४॥
आत्यष्ट्यान्यथ सूक्तानि परुच्छेपस्य तत्र तु ।
आद्यस्यातिधृतिः षष्ठी[ङ] जुषसे[च]त्यतिशाक्वरम् ॥२५॥
सप्त प्रप्रा व[छ] इत्यृग्भ्यां तृतीया[ज]त्यष्टिरुत्तमा[झ] ।
अष्टमस्यान्त्यया[ञ] साकं नवमस्याप्युपोत्तमे[ट] ॥२६॥
चतुर्थस्योत्तमा[ठ] त्रिष्टुब्दशमस्यो[ड]त्तमस्य[ढ] च ।
सप्तमस्यादितस्त्रिष्टुबेकस्या[ण]नुष्टुभस्तृचः[त] ॥२७॥
गायत्री[थ] च धृति[द]श्चैव दशत्यन्यस्य पञ्चमी[ध] ।
द्वे सूक्ते दीर्घतमसः प्रथमे[न] जागते तयोः ॥२८॥
पूर्वस्य दशमी[प] त्रिष्टुबथ चानुष्टुभं परम्[फ] ।
षष्ठञ्च जागतं सूक्तं चतुर्थं पञ्चमं[ब] च यत् ॥२९॥

---

(क) सू० १२२, ऋ० ६। (ख) सू० १२२, ऋ० ५। (ग) सू० १२६, ऋ० ६, ७। (घ) सू० ११६, ११७, ११८, १२१, १२३, १२४, १२५। (ङ) सू० १२७, ऋ० ६। (च) सू० १२७। (छ) सू० १२९, ऋ० ८, ९। (ज) सू० १२९, ऋ० ३। (झ) सू० १२९, ऋ० ११। (ञ) सू० १३०, ऋ० ६। (ट) सू० १३५, ऋ० ७, ८। (ठ) सू० १३०, ऋ० १०। (ड) सू० १३६, ऋ० ७। (ढ) सू० १३९, ऋ० ११। (ण) सू० १३३, ऋ० १। (त) सू० १३३, ऋ० २, ३, ४। (थ) सू० १३३, ऋ० ५। (द) सू० १३३, ऋ० ६। (ध) सू० १३९, ऋ० ५। (न) सू० १४०, १४१। (प) सू० १४०, ऋ० १०। (फ) सू० १४२। (ब) सू० १४३, १४४, १४५।

वैराजं दशमं[क] तस्मात्परे औष्णिह[ख]जागते[ग] ।
जागतानि तु सूक्तानि षोडशप्रभृतीनि षट्[घ] ॥४०॥
अनुष्टुबन्तादन्यानि वसू रुद्रेति त्रैष्टुभात्[ङ] ।
त्रयोविंशस्य सूक्तस्य सह षष्ठ्या तृतीयया[च] ॥४१॥
अस्य वामीय सूक्तस्य जगत्यः षड़िमा ऋचः ।
पञ्चपाद[छ] माकं जानां[ज] यज्ञायज्ञे[झ] अयं स[ञ] च ॥४२॥
सप्तार्धगर्भा[ट] गौरी[ठ] च तस्यानुष्टुबुपोत्तमा[ड] ।
प्रस्तारपङ्क्तिस्तु विराड्द्वाचत्वारिंशृग[ढ] च या ॥४३॥
अतोऽन्यत्त्रैष्टुभं सर्व्वं शिष्टमत्रावगम्यताम् ।
अत्र द्वित्रिष्टुबन्तानि प्रथमे द्वे[ण] अबोधि[त] च ॥४४॥
त्रिष्टुबन्तानि चैतानि जागतेषु मतथमीम्[थ] ।
तं पृच्छत[द] किमु श्रेष्ठ[ध] इति त्रैष्ट्यवगम्यताम् ॥४५॥
अगस्त्यस्य च सूक्तेषु गायत्रं सूक्तमष्टमम्[न] ।
द्वितीयं जागतं सूक्तं इन्द्र[प]मुद्धृत्य तूत्तमम् ॥४६॥
अष्टादशं[फ] चतुर्थं[ब] च द्वे एते जागते तयोः ।

---

(क) सू० १७९ । (ख) सू० १५० । (ग) सू० १५१ । (घ) सू० १५५, १५६, १५७, १५८, १६०, १६१ । (ङ) सू० १५८ । (च) सू० १६२, ऋ० ३, ६ । (छ) सू० १६४, ऋ० १२ । (ज) सू० १६४, ऋ० १५ । (झ) सू० १६४, ऋ० २३ । (ञ) सू० १६४, ऋ० २९ । (ट) सू० १६४, ऋ० ३६ । (ठ) १६४, ऋ० ४१ । (ड) सू० १६४, ऋ० ५१ । (ढ) सू० १६४, ऋ० ४२ । (ण) सू० १४०, ऋ० १२, १३ । सू० १४१, ऋ० १२, १३ । (त) सू० १४७, ऋ० ५, ६ । (थ) सू० १३३, ऋ० १ । (द) १७५, ऋ० १ । (ध) सू० १६१, ऋ० १ । (न) सू० १७२ । (प) सू० १६६, ऋ० १७, १५ । (फ) सू० १८२ । (ब) सू० १६८ ।

आद्यादृष्ट्य षष्ठ्यन्ते[क] चतुर्थाद्योत्तमं तृचम्[ख] ॥४७॥
षष्ठ[ग]मेकादश[घ]श्चास्य सूक्ते आनुष्टुभे परे ।
उभयोरुत्तमा[ङ] त्रिष्टुबाद्या[च] तु बृहती तयोः ॥४८॥
एकादशे[छ]ऽस्य बृहती स्कन्धोग्रीवीति गम्यताम् ।
पञ्चमस्य तु सूक्तस्य द्वितीया[ज]च्छ्विराट् स्मृता ॥४९॥
द्वादशस्योत्तमा[झ]त्रिष्टुप् शिष्टाः सर्वा अनुष्टुभः ।
एका पञ्चदशे सूक्ते पञ्चमी[ञ] बृहतीनिवृत् ॥५०॥
त्रयोविंश[ट]न्तु गायत्रं तस्योष्णिक् प्रथमा[ठ] तु तृक् ।
अनुष्टुब्गर्भरूपोष्णिगथवैषा[ड]वगम्यताम् ॥५१॥
तृतीया पञ्चमी षष्ठी सप्तमी[ढ]ता अनुष्टुभः ।
अनुष्टुब्बृहती चान्त्या[ण] गायत्रं सूक्तमुत्तरम्[त] ॥५२॥
विज्ञेय उत्तमे सूक्ते दशमीप्रभृतितृचः[थ] ।
आनुष्टुभं महापाङ्क्तो महा च बृहती परा[द] ।
अवशिष्टानि सूक्तानि [ध]त्रैष्टुभान्यवगम्यताम् ॥१५३॥

इति प्रथमं मण्डलम् ।

---

(क) सू० १८२, ऋ० ६, ८। (ख) सू० १६८, ऋ० ८, ९, १०। (ग) सू० १७०। (घ) १७५। (ङ) सू० १७०, ऋ० ५, सू० १७५, ऋ० ६। (च) सू० १७०, ऋ० १।१७५, १। (छ) सू० १७५, ऋ० १। (ज) सू० १६९, ऋ० २। (झ) १७६ ऋ० ६। (ञ) सू० १९९, ऋ० ५। (ट) सू० १८७। (ठ) सू० १८७, ऋ० १। (ड) सू० १८७, ऋ० २। (ढ) सू० १८७, ऋ० ३, ५, ६, ७। (ण) सू० १८७, ऋ० ११। (त) सू० १८८। (थ) सू० १९१, ऋ० १०, ११, १२। (द) सू० १९१, ऋ० १६। (ध) सू० ६६, ६७, ६९, ७१, ७२, ७३, ७४, ७७, ७८, ७९, ८०, ८१, ८३, ८४, ८५, ८६, ८९, ९०।

## अथ द्वितीयं मण्डलम् ।



सूक्तं गृत्समदस्याद्य प्रथमे(क) आगते उभे ।
आध्वर्यवी(ख)ति चर्चौ द्वे द्वितीये त्रैष्टुभे मते ॥१॥
त्रैष्टुभानुष्टुभे त्वस्य चतुर्थं पञ्चमं(ग) च यत् ।
गायत्र(घ)माष्टमात्सर्वं तत्रैकानुष्टुबुत्तमा(ङ) ॥२॥
ऊर्ध्वं चत्वारि(च) षड्विंशादूर्ध्वञ्च द्वे(छ) त्रयोदशात् ।
त्रीणि(ज) सप्तदशादूर्ध्वमूर्ध्वं चत्वारि(झ) चाष्टमात् ॥३॥
सर्वाण्येतानि सूक्तानि त्रैष्टुभानि त्रयोदश ।
उत्तमान्योत्तमा(ञ)मेषामुद्धृत्य जगतीस्त्वयम् ॥४॥
विश्वं सत्य(ट)मिति त्रिष्टुब्बृहस्पते अती(ठ)ति च ।
अतोऽन्यच्चागतं सूक्तं प्रागाते पित(ड)रित्यतः ॥५॥

---

(क) सू० १, २। (ख) सू० ३, ऋ० ६, ७। (ग) सू० ४, ५। (घ) सू० ६, ७, ८। (ङ) सू० ८, ऋ० ६। (च) सू० २६, २७, २८, २९। (छ) सू० १३, १४। (ज) सू० १८, १९, २०। (झ) सू० ९, १०, ११, १२। (ञ) सू० ४३, ऋ० ३। (ट) सू० २४, ऋ० १२। (ठ) सू० २३, ऋ० १५। (ड) सू० ३३।

आद्या[क]दि सूक्तमुद्धृत्य द्वाविंश[ख]मतिशाक्वरम् ।
अष्टिपञ्चपदावन्त्ये[ग] तृतीयः[घ] षोड़शाक्षरः ॥६॥
सिनीवालि[ङ] यासुबाह्व[च] र्याशुङ्गुरि[छ]त्यनुष्टुभः ।
त्रैष्टुभस्य तु शेषस्य चतुर्थे[ज] पञ्चमं[झ] च यत् ॥७॥
जागतानि द्वितीयञ्च[ञ] द्वितीयाद्युत्तं उत्तमम्[ट](१) ।
गायत्रं नवमं[ठ] तस्य सारस्वत्या[ड]वनुष्टुभौ ॥८॥
इमा ब्रह्मे[ढ]ति बृहती योद्भूता[ण] सातिशक्वरी ।
तदस्मै दिविष्टुबन्तं[त] सूक्तं सप्तदशन्तु यत् ॥९॥
त्रयोदशं चतुस्त्रिंशमेकत्रिंशं च षोड़शम् ।
एकविंशं त्रयोविंशं चतुर्विंशञ्च सप्त तु ॥१०॥
एतानि[थ] त्रिष्टुबन्तानि गम्यतां जागतेष्वपि ॥२म०॥

इति द्वितीयं मण्डलम् ।

---

(१) पञ्चमोत्तर उत्तमे(द) इति पाठः सम्भवितुमर्हति ।

---

(क) सू० २२, ऋ० १ । (ख) सू० २२ । (ग) सू० २२, ऋ० ४ । (घ) सू० २२, ऋ० ३ । (ङ) सू० ३२, ऋ० ६ । (च) सू० ३२, ऋ० ७ । (छ) सू० ३२, ऋ० ८ । (ज) सू० ३३, ३६ । (झ) सू० २४, ३७ । (ञ) सू० २१, ३४ । (ट) सू० २६ । (ठ) सू० ४१ । (ड) सू० ४१, ऋ० १६, १७ । (ढ) सू० ४१, ऋ० १८ । (ण) सू० ४३, ऋ० २ । (त) सू० १७, ऋ० ८, ९ । (थ) सू० १३, ऋ० १३; सू० ३४, ऋ० १५; सू० ३१, ऋ० ७; सू० १६, ऋ० ९; सू० २१, ऋ० ५; सू० २३, ऋ० १९; सू० २४, ऋ० १६ । (द) सू० २५, २६'।

## अथ तृतीयं मण्डलम् ।



द्वितीय[क]श्च तृतीय[ख]श्च विश्वामित्रस्य जागते ।
नवम[ग] वार्हत सूक्त त्रिष्टुबस्योत्तमा[घ]न्यृचम् ॥१॥
औष्णिह[ङ] द्वे च गायत्रे[च] वार्हतादुत्तराणि तु ।
षोड्शे षड्चे सूक्ते[छ] प्रगाथा वार्हता द्वृचाः ॥२॥
तुभ्य स्तोका[ज]घृतवन्त.[झ] सप्तर्चन्तु चयोदशम्[ञ] ।
ये वृक्णास.[ट] पुरीष्यास[ठ] उपकृथस्ये[ड]त्यनुष्टुभः ॥३॥
त्रिष्टुबेव विराड्रूपा तुभ्य श्चोतन्त्य[ढ]गत्र या ।
सतोबृहत्यौ तत्र द्वे ओजिष्ठन्ते[ण] दश त्रिप.[त] ॥४॥
अतोऽन्यत्त्रैष्टुभ सर्वमानिर्मथित[थ] इत्यतः ।
अनुष्टुभादिगायत्र[द] वैराज चोत्तरे[ध] ततः ॥५॥
उत्तर[न] जागत तस्य त्रिष्टुभन्तिस्र उत्तमा.[प] ।
गायत्रे उत्तरे सूक्ते[फ] तयो षड्च उत्तरे ॥६॥

(क) सू० २। (ख) सू० ३। (ग) सू० ९। (घ) सू० ९, ऋ० ९। (ङ) सू० १०। (च) सू० ११, १२। (छ) सू० १६। (ज) सू० २१, ऋ० १। (झ) सू० २१, ऋ० २। (ञ) सू० १३। (ट) सू० ८, ऋ० ७। (ठ) सू० २२, ऋ० ४। (ड) सू० ८, ऋ० ७। (ढ) सू० ११, ऋ० ४। (ण) सू० २१, ऋ० ५। (त) सू० २२, ऋ० ६। (थ) सू० २३। (द) सू० २४। (ध) सू० २५। (न) सू० २६। (प) सू० २९, ऋ० ७, ८, ९। (फ) सू० २७, २८।

उष्णिक्त्रिष्टुब्जगत्येष[1] तृतीयाप्रभृतिस्तृचः[क] ।
अस्तीद[ख]न्त्रैष्टुभं तस्य जगत्यौ द्वे उपोत्तमे[ग] ॥७॥
एकादशी[घ] च षष्ठी[ङ] च तावत्योऽन्या अनुष्टुभः ।
प्रथमा च चतुर्थी च दशमी द्वादशी[च] च या ॥८॥
एता अनुष्टुभः सर्वा नदीस्तोत्रस्य चोत्तमा[छ] ।
अतोऽन्यत्त्रैष्टुभं सर्वं यदिन्द्रं मति[ज]रित्यतः ।९॥
अनुष्टुभ[झ]न्तमुद्धृत्य गायत्रं सूक्त[ञ]मष्टमम् ।
गायत्राणि तु वै त्रीणि[ट] त्रैष्टुभ[ठ]न्द्वे [ड]च वार्हते ॥१०॥
षड्[ढ]त्तराणि सूक्तानि त्रैष्टुभान्युत्तरस्य तु ।
जगत्यः प्रथमास्तिस्र[ण]स्तिस्रो गायत्र्य उत्तमाः[त] ॥११॥
गायत्रमुत्तमं[थ] तस्य षष्ठ्ये[द]का जगतीनिचृत् ।
पञ्चमी[ध] चोत्तमे[न] च द्वे त्रिष्टुभस्त्रैष्टुभे परे[प] ॥१२॥
दशमी[फ] तु जगत्यस्य गायत्री च त्रयोदशी[ब] ।

(क) सू० २८, ऋ० ३, ४, ५। (ख) सू० २९। (ग) सू०२९, ऋ०१४, १५। (घ) सू० २९, ऋ० ११। (ङ) सू० २९, ऋ० ६। (च) सू० २९, ऋ० १, ४, १०, १२। (छ) सू० ३३, ऋ० १३। (ज) सू० ३९। (झ) सू० ३७, ऋ० ११। (ञ) सू० ३७। (ट) सू० ४०, ४१, ४२। (ठ) सू० ४३। (ड) सू० ४४, ४५। (ढ) सू० ४६, ४७, ४८, ४९, ५०, ५१। (ण) सू० ५२, ऋ०१, २, ३। (त) सू० ५२, ऋ० १०, ११, १२। (थ) सू० ५२। (द) सू० ५३, ऋ० ६। (ध) सू० ५३, ऋ० ५। (न) सू० ५३ ऋ० ७, ८। (प) सू० ५४। (फ) सू० ५३, ऋ० १०। (ब) सू० ५३, ऋ० १३।

(१) एषेति पाठो भवितुमर्हति ।

चतुर्थस्योत्तमा(क)मेकामृचमुद्धृत्य चोभयोः ।
प्रथमा(ख) मृचमुद्धृत्य अष्टमस्यापि जागतम् ॥७॥
अनुष्टुप्सप्तमस्यान्या(ग) चतस्रोऽन्या(घ)श्च पञ्चमे ।
पञ्चमस्यानुवाकस्य मध्ये गायत्रयोर्द्वयोः(ङ) ॥८॥
द्वितीयस्य(च) तृतीयस्य(छ) सूक्ते आनुष्टुभे उभे ।
गायत्रं सप्तमं(ज) सूक्तं जागते नवमाष्टमे(झ) ॥९॥
नवमस्य तु ये ते त्रिरित्यन्या(ञ) मृचं विना ।
जगत्येवोत्तमस्यान्या(ट)द्दशमी(ठ) पञ्चमस्य तु ॥१०॥
एकादशस्य गायत्रस्तृचोऽन्यो(ड)द्दशमस्य च ।
द्वादशे तु द्वितीया च तृतीया चोत्तमा(ढ) च या ।
आनुष्टुभे त्रिष्टुभन्ताः पुरउष्णिक् च पञ्चमी(ण) ॥११॥

इति चतुर्थं मण्डलम् ।

---

(क) सू० २६, ऋ० ९, सू० ४५, ऋ० ७। (ख) सू० ४०, ऋ० १। (ग) सू० ३९, ऋ० ६। (घ) सू० ३७, ऋ० ५, ६, ७, ८। (ङ) सू० ४६, ४९। (च) सू० ४७। (छ) सू० ४८। (ज) सू० ५२। (झ) सू० ५३, ५४। (ञ) सू० ५४, ऋ० ६। (ट) सू० ५८, ऋ० ११। (ठ) सू० ५०, ऋ० १०। (ड) सू० ५५, ऋ० ८, ९, १०; सू० ५६, ऋ० ५, ६, ७। (ढ) सू० ५७, ऋ० २, ३, ८। (ण) सू० ५०, ऋ० ५।

# अथ पञ्चमं मण्डलम् ।



आनुष्टुभानां सूक्तानां पङ्क्तिरन्त्या(क)त्रिमण्डले ।
उरोष्ट(ख) इन्द्र(ग)कृष्टो(घ)ऽच्छ(ङ)वलित्या द्वे(च)यद्य(छ) च ॥१॥
विदा(ज)आचिकिताने(झ)ति सूक्तान्येतान्यपास्य तु ।
अत्रीणां पञ्चमं(ञ) सूक्तं गायत्रं पाङ्क्तमुत्तरं(ट) ॥२॥
आनुष्टुभं सप्तम(ठ)न्तु जागतं सूक्तमष्टमं(ड) ।
नवमं दशम(ढ)ञ्चैषां सूक्ते आनुष्टुभे तयोः ॥३॥
पूर्वस्य पञ्चमी(ण)पङ्क्तिश्चतुर्थी(त) चरमस्य च ।
अतोऽन्यत्त्रैष्टुभं सर्वमाप्रवेधस(थ)इत्यतः ॥४॥
उद्धृत्योपोत्तमे सूक्ते गायत्रेऽर्चन्त इत्युभे(द) ।
शकरीश्च चतुर्विंशीं जनस्ये(ध)ति च जागतं ॥५॥
अष्टौ पराणि सूक्तानि(न) ज्ञेयान्यानुष्टुभान्यतः ।
चतुर्थ्यन्त्या(प)विराड्रूपा आद्ये(फ)गायत्र्यौ लिङ्ग ॥६॥

---

(क) सू० ७, १६, १७, १८, २०, २१, २२, २३, २६ । (ख) सू० ३८ । (ग) सू० ३१ । (घ) सू० ७४ । (ङ) सू० २५ । (च) सू० ६७, ८४ । (छ) सू० ७३ । (ज) सू० ४५ । (झ) सू० ६६ । (ञ) सू० ५ । (ट) सू० ६ । (ठ) सू० ७ । (ड) सू० ८ । (ढ) सू० ९, १० । (ण) सू० ९, ऋ० ५ । (त) सू० १०, ऋ० ४ । (थ) सू० १५ । (द) सू० १३, १४ । (ध) सू० ११ । (न) सू० १६, १७, १८, १९, २०, २१, २२, २३ । (प) सू० १९, ऋ० ५ । (फ) सू० १९, ऋ० १, २ ।

अनुष्टुभस्तु त्रिंशी च द्वाविंशी द्वादशी[क] च या ॥१३॥
अष्टादशी[ख] द्विपदास्य जगत्येव तु षोडशी[ग]।
इम मत्र उपक्रम्य त्रैष्टुभान्युत्तराणि षट्[घ] ॥१४॥
तेषां षष्ठे चतस्रस्तु मैत्रे गायत्र्य उत्तमाः[ङ]।
जागत[च]त्रैष्टुभे[छ] सूक्ते सप्तर्चे द्वे उपोत्तमे।
गायत्रमुत्तम[ज] तस्य त्रिष्टुभस्तिस्र[झ] आदितः ॥१५॥

इति तृतीयं मण्डलम्।

---

(क) सू० ५१, ऋ० १९, २०, २०। (ख) सू० ५३, ऋ० १८। (ग) सू० ५२, ऋ० १६। (घ सू० ५४, ५५, ५६, ५७, ५८, ५९। (ङ) सू० ५९, ऋ० ६, ७, ८, ९। (च) सू० ६०। (छ) सू० ६१। (ज) सू० ६२। (झ) सू० ६२, ऋ० १, २, ३।

# अथ चतुर्थं मण्डलम्।

प्रथमा[क] त्रेष्टुभेस्त्वष्टिर्वामदेवस्य षट्पदा।
द्वितीया[ख] तिजगत्यस्य तृतीया[ग]स्यां निचृद्धृतिः ॥१॥
सप्तमस्य तु सूक्तस्य प्रथमा[घ] जगतीनिचृत्।
अनुष्टुभः पराः पञ्च प्राक्[ङ] सप्तस्य यदि[च]त्यतः ॥२॥
गायत्रे दशमे सूक्ते भुरिजः पदपङ्क्तयः[छ]।
उष्णिहो वा विराजस्ताः[ज] पञ्चम्या[झ]सामनुष्टुपा ॥३॥
य इमे च महापूर्वा पदपङ्क्तिर्निगद्यते।
अग्निर्होते[ञ]ति गायत्रं नवमं चाष्टमं[ट] च यत् ॥४॥
अयं चक्र[ठ]मध श्वेतं[ड] प्रधार्ष्यावस्य ते उभे।
गायत्राणि तु वै त्रीणि[ढ] न किरिन्द्रेति तत्र तु ॥५॥
वामं वामन्ते[ण] क इम[त]मेतद्वे[थ]दित्यनुष्टुभः।
चतुर्थस्यानुवाकस्य जागतं सूक्तमुत्तमम्[द] ॥६॥

---

(क) सू० १, ऋ० १। (ख) सू० १, ऋ० २। (ग) सू० १, ऋ० ३। (घ) सू० ७, ऋ० १। (ङ) सू० ७, ऋ० २, ३, ४, ५, ६। (च) सू० ७, ऋ० ७। (छ) सू० १०, ऋ० १, २, ३। (ज) सू० १० ऋ० ४, ६, ७, ८। (झ) सू० १०, ऋ० ५। (ञ) सू० १५। (ट) सू० ८, ९। (ठ) सू० १७, ऋ० १४। (ड) सू० २७, ऋ० ५। (ढ) सू० ३०, ३१, ३२। (ण) सू० ३०, ऋ० २४। (त) सू० २४, ऋ० १०। (थ) सू० ३० ऋ० ८। (द) सू० ४५।

द्वैपदा[क]नुष्टुभे[ख] च द्वे गायत्रं तत उत्तरं[ग] ।
त्रैष्टुभा[घ]नुष्टुभौ[ङ]सूक्ते परे पूर्वापरौ तृचौ ॥७॥
अनुष्टुब्[च]द्वे च गायत्र्यौ[छ] उत्तरस्योत्तरस्तृचः ।
त्रिष्टुबेका[ज]जगत्येका[झ]त्रिष्टुबेका[ञ]द्वितस्तृचः ॥८॥
त्रैष्टुभान्येव[ट] पञ्चोर्ध्वं परन्त्वेभ्यस्तु जागतं[ठ] ।
एतत्तु त्रिष्टुबन्त[ड]श्च यत्त[ढ]आनुष्टुभं परं ॥९॥
स आगमत्त्रैष्टुभे द्वे[ण] द्वे[त] एवानुष्टुभे उरोः ।
स आगमदिति त्वस्य तृतीया[थ] जगती स्मृता ॥१०॥
उत्तराणि तु सूक्तानि[द] चत्वारि त्रैष्टुभान्यतः ।
तेषामेकातिजगती द्वितीयस्यास्ति षोडशी[ध] ॥११॥
प्रथमस्य नवर्चस्य प्रथमा[न]स्तिस्र उष्णिहः ।
अभि न इळे[प]ति विंशु[फ]प्रैष स्तोमो[ब]ऽष्टदयः[भ] ॥१२॥
एता एतेषु प्रकर्ष्या यं वै[म]यत्ने[य]त्यनुष्टुभे ।

---

(क) सू० २४। (ख) सू० २५। (ग) सू० २६। (घ) सू० २७, ऋ० १, २, ३। (ङ) सू० २७ ऋ० ४, ५, ६। (च) सू० २८, ऋ० ४। (छ) सू० २८, ऋ० ५, ६। (ज) सू० २८, ऋ० १। (झ) सू० २८, ऋ० २। (ञ) सू० २८, ऋ० ३। (ट) सू० २९, ३०, ३१, ३२, ३३। (ठ) सू० ३४। (ड) सू० ३४, ऋ० ९। (ढ) सू० ३५। (ण) सू० ३६, ३७। (त) सू० ३८, ३९। (थ) सू० ३६, ऋ० ३। (द) सू० ४०, ४१, ४२, ४३। (ध) सू० ४१, ऋ० १६। (न) सू० ४०, ऋ० १, २, ३। (प) सू० ४१, ऋ० १९। (फ) सू० ४१, ऋ० २०। (ब) सू० ४२, ऋ० १६। (भ) सू० ४२, ऋ० १५। (म) सू० ४०, ऋ० ९। (य) सू० ४०, ऋ० ५।

जागत[क]त्रैष्टुभा[ख]न्येव व्यत्यस्तान्युत्तराणि षट् ॥१३॥
तत्राद्यं द्वित्रिष्टुब[ग]न्तं सूक्तं तं प्रत्नथेत्यदः ।
त्रिष्टुबन्त्या[घ] तृतीयस्याप्यत्र साकं द्वितीयया[ङ] ॥१४॥
विश्व[च] आनुष्टुभं सूक्तं तेभ्यः पञ्चर्चमुत्तर[छ] ।
आद्या[ज]श्चतस्रो गायत्र्य उत्तरस्योष्णिहश्च षट्[झ] ॥१५॥
त्रिष्टुभस्तु जगत्यो वा तिस्र[ञ]श्चान्त्ये[ट] अनुष्टुभौ ।
उद्धृत्य षोलश्यौं पङ्क्तिं षष्ठी[ठ]मानुष्टुभं परं ॥१६॥
को वेदसूक्ते गायत्र्या चाष्टमी द्वादशी[ड] च या ।
तृतीया[ढ]नुष्टुबेवास्य द्वितीया[ण] बृहतीनिचृत् ॥१७॥
पञ्चमीपञ्चदश्यादी[त]प्रगाथौ काकुभौ तृचौ ।
ककुभः प्रथमा यास्य दशम्येकादशी[थ] च या ॥१८॥
शिष्टाः सतोबृहत्योऽन्या[द]श्चतुर्थ्याः[ध] पुरउष्णिहः ।
चतुर्थस्यानुवाकस्य जागते द्वे उपोत्तमे[न] ॥१९॥
उपान्त्या[प] प्रथमे त्रिष्टुबुत्तमा तूत्तरे[फ]तयोः ।

---

(क) सू० ४४, ४६, ४८। (ख) सू० ४५, ४७, ४९। (ग) सू० ४४, ऋ० १४, १५। (घ) सू० ४६, ऋ० ८। (ङ) सू० ४६, ऋ० २। (च) सू० ५०। (छ) सू० ५०, ऋ० ५। (ज) सू० ५१, ऋ० १,२, ३, ४। (झ) सू० ५१, ऋ० ५, ६, ७, ८, ९, १०। (ञ) सू० ५१, ऋ० ११, १२, १३। (ट) सू० ५१, ऋ० १४, १५। (ठ) सू० ५२, ऋ० ६,१६। (ड) सू० ५३, ऋ० ८, १२। (ढ) सू० ५३, ऋ० ३। (ण) सू० ५३, ऋ० २। (त) सू० ५३, ऋ० ५,६,१५,१६। (थ) सू० ५३, ऋ० १,१०,११। (द) सू० ५३, ऋ० ७, ९, १३,१४। (ध) सू० ५३, ऋ० ४। (न) सू० ५४, ५५। (प) सू० ५४, ऋ० १४। (फ) सू० ५५, ऋ० १०।

उत्तम(क) वार्हतं त्वस्य प्रगाथौ वार्हतौ तृचौ ॥२०॥
द्वितीयाप्रभृति.(ख)पूर्वः षष्ठीप्रभृति(ग)रुत्तरः ।
उत्तराणि तु चत्वारि (घ)व्यत्यस्तानि यथैव षट् ॥२१॥
द्वित्रिष्टुबन्त(ङ) तत्राद्यं द्विजगत्य(च)न्तमुत्तमम् ।
यदुत्तरं(छ) मध्यमयोस्तत्रापि त्रिष्टुबुत्तमा ॥२२॥
सूक्तं केष्ठे(ज)ति गायत्रमनुष्टुप्तस्य पञ्चमी(झ) ।
एका सतोबृहत्यस्य नवमी(ञ)त्रैष्टुभं परम्(ट) ॥२३॥
घृतस्य(ठ) जागतं सूक्तं चत्वार्या(ड)नुष्टुभान्यथ ।
गायत्रं(ढ) त्रैष्टुभं(ण) च द्वे गायत्रे(त) चैक(थ)मौष्णिहम् ॥२४॥
आनुष्टुभे(द)च पाङ्क्तं(ध) च त्रैष्टुभे चोत्तरे(न) ततः ।
एक(प)मानुष्टुभं तस्य प्रथमा(फ)स्तिस्र उष्णिहः ॥२५॥
अत्रिर्यद्वा(ब)मिति त्रिष्टुबुपा त्वत्र प्रतीयताम् ।
सप्तोत्तराणि सूक्तानि पाङ्क्तं(भ) त्रैष्टुभ(म)जागते(य) ॥२६॥

---

(क) सू० ५६ । (ख) सू० ५६, ऋ० २, ३ । (ग) सू० ऋ० ५६, ६, ७ । (घ) सू० ५७, ५८, ५९, ६० । (ङ) सू० ५७, ऋ० ७, ८ । (च) सू० ६०, ऋ० ७, ८ । (छ) सू० ५९, ऋ० ८ । (ज) सू० ६१ । (झ) सू० ६१, ऋ० ५ । (ञ) सू० ६१, ऋ० ९ । (ट) सू० ६२ । (ठ) सू० ६३ । (ड) सू० ६४, ६५, ६६, ६७ । (ढ) सू० ६८ । (ण) सू० ६९ । (त) सू० ७०, ७१ । (थ) सू० ७२ । (द) सू० ७३, ७४ । (ध) सू० ७५ । (न) सू० ७६, ७७ । (प) सू० ७८ । (फ) सू० ७८, ऋ० १, २, ३ । (ब) सू० ७८, ऋ० ४ । (भ) सू० ७९ । (म) सू० ८० । (य) सू० ८१ ।

गायत्रं[क] त्रैष्टुभे [ख]च द्वे मध्ये चानुष्टुभं[ग] तयोः ।
जागतोऽस्थावदेत्यस्मिन्विदृचा[घ]निति यस्तृचः ॥२७॥
तत्सवितुर्वृणीमहे[ङ] यत्पर्जन्ये[च]त्यनुष्टुभौ ।
उपोत्तमस्य सूक्तस्य विराट्पूर्वा त्वृगुत्तमा[छ] ॥२८॥
शिष्टा अनुष्टुभः सर्वा अतिजागतमुत्तमम्[ज] ।

इति पञ्चमं मण्डलम् ।

---

(क) सू० ८२ । (ख) सू० ८३, ८५ । (ग) सू० ८४ । (घ) सू० ८३, ऋ० २, ३, ४ । (ङ) सू० ८२, ऋ० १ । (च) सू० ८३, ऋ० ९ । (छ) सू० ८६, ऋ० ६ । (ज) सू० ८७ ।

## अथ षष्ठं मण्डलम् ।



त्रैष्टुभेष्वष्टमं सूक्तं भरद्वाजस्य जागतम् ।
अदब्धेभिस्तवे[क]त्येतामृचमुद्धृत्य तूत्तमाम् ॥१॥
सप्तमं[ख] द्विजगत्यन्तं त्वं प्रतानीति शक्वरी[ग] ।
चतुर्दशं द्वितीयस्य सूक्ते आनुष्टुभे उभे ॥२॥
अच्छानो[घ]ऽभिप्रयांसी[ङ]ति शक्वर्याविव ते उभे ।
जगत्यौ[च]शक्वरीनिचृज्जगत्या[छ]वतिशक्वरी[ज] ॥३॥
एतौ पञ्चदशस्य द्वौ जागतस्यादितस्तृचः ।
अनुष्टुप्सप्तदश्य[झ]स्य बृहत्यष्टादशी[ञ]निचृत् ॥४॥
षट्चत्वारिंश्य[ट]स्य त्रिष्टुप् गायत्रे सति षोडशे ।
सप्तविंशत्युत्तमे च द्वे तिस्र एता अनुष्टुभः[ठ] ॥५॥
ककाद्या वर्धमाना[ड]स्य षष्ठी चापि प्रतीयताम् ।
एका सप्तदशस्यान्त्या[ढ] द्विपदा दशमस्य[ण] च ॥६॥

---

(क) सू० ८, ऋ० ७। (ख) सू० ७, ऋ० ६, ७। (ग) सू० २, ऋ० ११। (घ) सू० १४, ऋ० ६। (ङ) सू० १५, ऋ० १५। (च) सू० १५, ऋ० १, २। (छ) सू० १५, ऋ० ३। (ज) सू० १५, ऋ० ६। (झ) सू० १५, ऋ० १७। (ञ) सू० १५, ऋ० १८। (ट) सू० १६, ऋ० ४६। (ठ) सू० १६, ऋ० २७, ४७, ४८। (ड) सू० १६, ऋ० १, ६। (ढ) सू० १७, ऋ० १५। (ण) सू० १०, ऋ० ७।

द्यौर्न सूक्तं गता या त्वृत्विपिप्रो(क)रिति सा विराट् ।
आ गाव इति सूक्तस्य द्वितीयाप्रभृतितृचः ॥७॥
जागत(ख)स्त्रैष्टुभस्तस्य तथैवानुष्टुबुत्तमा(ग) ।
आनुष्टुभं(घ) बृहत्यन्त(ङ) प्रत्यस्मा इति सूक्ततः ॥८॥
यस्यौ(च)ष्णिहं परं यत्तु तस्यादौ षडनुष्टुभः(छ) ।
विराज(ज)स्तूत्तरास्तिस्रस्तासां मध्यैव वा विराट्(झ) ॥९॥
य आनयदिति तस्मिन् गायत्रेऽनुष्टुबुत्तमा(ञ) ।
पुरूतम(ट)मिति तेषा तत्रैवातिनिचृन्मता ॥१०॥
त्वामिद्धिसूक्ते प्रागाथे प्रगाथा बार्हता(ठ)द्वृचाः ।
स्वादुष्किलेति सूक्तस्य जगती सप्तविंश्य(ड)थ ॥११॥
चतुर्विंशी(ढ) तु गायत्री त्रयोविंशी(ण)त्यनुष्टुबृक् ।
ऊनविंशी(त) बृहत्यस्य गायत्र्या द्विपदोत्तरा(थ) ॥१२॥
सुषे जनमिति तस्य शक्वर्येकोत्तमा(द) निचृत् ।
आदितः पृश्निसूक्तस्य प्रगाथौ बार्हतौ(ध) द्वृचौ ॥१३॥

---

(क) सू० २०, ऋ० ७। (ख) सू० २८, ऋ० १, २, ३। (ग) सू० २८, ऋ० ८। (घ) सू० ४२, ऋ० १, २, ३। (ङ) सू० ४२, ऋ० ४। (च) सू० ४३। (छ) सू० ४४, ऋ० १, २, ३, ४, ५, ६। (ज) सू० ४४, ऋ० ७, ८, ९। (झ) सू० ४४ ऋ० ८। (ञ) सू० ४५, ऋ० ३३। (ट) सू० ४५, ऋ० २९। (ठ) सू० ४६, ऋ० ६, ७। (ड) सू० ४७, ऋ० २७। (ढ) सू० ४७, ऋ० २४। (ण) सू० ४७, ऋ० २३। (त) सू० ४७, ऋ० १९। (थ) सू० ४७, ऋ० २५। (द) सू० ४९, ऋ० १५। (ध) सू० ४८, ऋ० १, २।

बृहती[क] जगती[ख] त्रिष्टु[ग]ब्जगती[घ] चोत्तरा ऋचः।
उत्तरौ च प्रगाथौ द्वौ तृचौ बार्हत[ङ]काकुभौ[च] ॥१४॥
अष्टादशीत्रयोदश्योरन्तरा[छ]पुरउष्णिहः।
बृहत्य[ज]तिजगत्यौ[झ] च प्रगाथश्चैव काकुभः[ञ] ॥१५॥
द्वे बृहत्यौ[ट] त्रिष्टुबे[ठ]कानुष्टुब[ड]श्चोत्तरा ऋचः।
महासतोबृहत्यौ[ढ] च महा च बृहतीदयम्[ण] ॥१६॥
जगती[त]त्रिष्टुबि[थ]त्याभ्यां शब्दाभ्यामत्र तूच्यते।
पञ्चमस्यानुवाकस्य दशमस्तृच औष्णिहः[द] ॥१७॥
तृतीयस्य तु गायत्र्यो विश्वेदेवास ए[ध]ति षट्।
गायत्रं[न] पञ्च सूक्तानि चतुर्थप्रभृतीन्यथ ॥१८॥
विश्वेदेवासमा[प]जाग्मो जगत्यावेत्र[फ] ते उभे।
आ ते स्वस्ति[ब]मपि पन्थां[भ] यां पूष[म]न्नित्यनुष्टुभः ॥१९॥

---

(क) सू० ४८, ऋ० १। (ख) सू० ४८, ऋ० ३। (ग) सू० ४८, ऋ० ५। (घ) सू० ४८, ऋ० ६। (ङ) सू० ४८, ऋ० १०। (च) सू० ४८, ऋ० ११। (छ) सू० ४८, ऋ० १३, १८। (ज) सू० ४८, ऋ० १४। (झ) सू० ४८, ऋ० १५। (ञ) सू० ४८, ऋ० १६। (ट) सू० ४८, ऋ० १९, २०। (ठ) सू० ४८, ऋ० २१। (ड) सू० ४८, ऋ० २२। (ढ) सू० ४८, ऋ० ६, ८। (ण) सू० ४८, ऋ० ७, २१ ( (त) सू० ४९, ऋ० १५। (थ) सू० ४९, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४। (द) सू० ५१, ऋ० १३, १४, १५। (ध) सू० ५२, ऋ० ७, ८, ९, १०, ११, १२,। (न) सू० ५३, ५४, ५५, ५६, ५७। (प) सू० ५२, ऋ० १४। (फ) सू० ५८, ऋ० २। (ब) सू० ५६, ऋ० ६। (भ) सू० ५१, ऋ० १६। (म) सू० ५३, ऋ० ८।

बार्हतं दशमं[क] तस्य चतस्रोऽन्या अनुष्टुभः[ख] ।
त्रिष्टु[ग]ब्बृहत्य[घ]नुष्टुप्[ङ] च परस्य तृच उत्तमः ॥२०॥
गायत्रस्य घतोऽन्यास्तु त्रिष्टुभस्तिस्र[च] आदितः ।
गायत्रमुत्तमं[छ] सूक्तं त्रिष्टुभ[ज]स्योत्तमा निचृत् ॥२१॥
जगत्यः प्रथमास्तिस्र[झ]स्तथा चान्या त्रयोदशी[ञ] ।
षष्ठस्य त्वनुवाकस्य पञ्च त्रिष्टुभ[१] उत्तमाः[ट] ॥२२॥
उद्धृत्याश्विरिवे[ठ]त्येकाम्तृचौ च द्वे उपोत्तमे ।
सप्तमस्य तु सूक्तस्य जगत्यौ द्वे उपोत्तमे[ड] ॥२३॥
नवमं[ढ] जागतं सूक्तं दशमे[ण]चादितस्तृचः ।
उत्तमस्य जगत्यौ तु षष्ठी[त] च दशमी[थ] च या ॥२४॥
एका सप्तदशी[द] पङ्क्तिः संवाशते[ध]ति शक्वरी ।

इति षष्ठं मण्डलम् ॥

---

(१) अनुष्टुभ इति भ-पुस्तके पठ्यते ।

---

(क) सू० ५९ । (ख) सू० ५९, ऋ० ७, ८, ९, १० । (ग) सू० ६०, ऋ० १३ । (घ) सू० ६०, ऋ० १४ । (ङ) सू० ६०, ऋ० १५ । (च) सू० ६०, ऋ० १, २, ३ । (छ) सू० ६१ । (ज) सू० ६१, ऋ० १४ । (झ) सू० ६१, ऋ० १, २, ३ । (ञ) सू० ६१, ऋ० १३ । (ट) सू० ६३, ६४, ६५, ६६, ६७ । (ठ) सू० ७५, ऋ० १४, १५, १६ । (ड) सू० ६८, ऋ० १०, ११ । (ढ) सू० ७० । (ण) सू० ७१, ऋ० १, २, ३ । (त) सू० ७५, ऋ० ६ । (थ) सू० ७५, ऋ० १० । (द) सू० ७५, ऋ० १७ । (ध) सू० ६३, ऋ० १० ।

# अथ सप्तमं मण्डलम् ।



चैष्टुभे तु वसिष्ठस्य विराजोऽष्टादशा[क]दित ।
प्रथमस्यानुवाकस्य द्वैपद सूक्तमुत्तमम्[ख] ॥१॥
चतुर्दश च्चत्यादि[ग] तस्माद्गायत्रमुत्तरम्[घ] ।
प्रगाथ वार्चंत सूक्त द्वादशर्चमुपोत्तमम्[ङ] ॥२॥
द्वितीयस्यानुवाकस्य तेपु तेषामुपोत्तमम्[च] ।
प्रगाथमेषामुद्धृत्य द्वितीया द्विपदाम्टचम्[छ] ॥३॥
वैराज पञ्चम[ज] सूक्त त्रिष्टुबस्योत्तमा[झ] निच्चत् ।
गायत्र[ञ] त्रिविराड्न्त[ट] द्वादशर्च चतुर्दशम् ॥४॥
तृतीयस्यानुवाकस्य चतस्रोऽ[ठ]न्त्या अनुष्टुभ ।
उत्तमस्य तु सूक्तस्य गायत्री प्रथमा[ड] पुन ॥५॥
उपरिष्टाद्बृहत्यस्तु तिस्रो[ढ]मध्यगता ऋच ।
आदावाद्यस्य सूक्तस्य द्विपदा एकविंशति[ण] ॥६॥

---

(क) सू० १, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८। (ख) सू० १७। (ग) सू० १४, ऋ० १। (घ) सू० १५। (ङ) सू० १६। (च) सू० ३२। (छ) सू० ३२, ऋ० ३। (ज) सू० २२। (झ) सू० २२, ऋ० ९। (ञ) सू० ३१। (ट) सू० ३१, ऋ० १०, ११, १२। (ठ) सू० ५५, ऋ० ५, ६, ७, ८,। (ड) सू० ५५, ऋ० १। (ढ) सू० ५५, ऋ० २, ३, ४। (ण) सू० ३४, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९, २०, २१।

अष्टमस्य जगत्याद्या[क] सूक्तस्यैकादशस्य[ख] च ।
त्रयोदशं जागतं तु सूक्तं सप्तदशं[ग] च यत् ॥७॥
तयोः पूर्वं[घ] त्रिष्टुबन्तं प्रकर्ष्यन्तमथोत्तरम्[ङ] ।
चतुर्थस्यानुवाकस्य प्रगाथा वार्हता[च]स्तृचाः ॥८॥
सूक्तस्यानुष्टुबन्तस्य[छ] चतुर्थस्यादितस्तु यः ।
मारुतस्तत्र गायत्रस्तृचः सान्तपना[ज] इति ॥९॥
एकादशा[झ]द्यौ सूक्तस्य द्विपदाः प्रथमस्य तु ।
एकादशस्य तिस्रो[ञ]ऽन्त्या गायत्र्यो नव[ट]चादितः ॥१०॥
प्रगाथा वार्हताः शेषाः[ठ] पुरउष्णिक् षोडशी[ड] ।
त्रयोदशं[ढ] तु वैराजमृचावुद्धृत्य तूत्तमे[ण] ॥११॥
पञ्चमस्यानुवाकस्य गायत्रं सूक्तमुत्तमम्[त] ।
एकादशे[थ] चतुर्थे[द] च प्रगाथा वार्हतास्तृचाः ॥१२॥
ऐन्द्रावरुणे द्वे सूक्ते[ध] दशर्चे जागते उभे ।

---

(क) सू॰ ४१, ऋ॰ १ । (ख) सू॰ ४४, ऋ॰ १ । (ग) सू॰ ५॰ । (घ) सू॰ ४६ । (ङ) सू॰ ५०, ऋ॰ ४ । (च) सू॰ ५६, ऋ॰ ३, ५ । (छ) सू॰५६, ऋ॰ १२ । (ज) सू॰ ५६, ऋ॰ ६, १०, ११ । (झ) सू॰ ५६, ऋ॰ १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११ । (ञ) सू॰ ६६, ऋ॰ १७, १८, १९ । (ट) सू॰ ६६, ऋ॰ १, २, ३, ४, ५, ६, ७, ८, ९ । (ठ) सू॰ ६६, ऋ॰ १०, ११, १२, १३, १४, १५ । (ड) सू॰ ६६, ऋ॰ १६ । (ढ) सू॰ ६८, ऋ॰ १, २, ३, ४, ५, ६, ७ । (ण) सू॰ ६८, ऋ॰ ८, ९ । (त) सू॰ ८९ । (थ) सू॰ ८१, ऋ॰ १, ३, ५ । (द) सू॰ ७४, ऋ॰ १, ३, ५ । (ध) सू॰ ८२, ८३ ।

उत्तमस्य तु सूक्तस्य दैवमी निचृदुत्तमा(क) ॥१३॥
षष्ठस्य त्वनुवाकस्य प्रगाथो बार्हतो(ख)द्वृचः ।
एका(ग)प्रस्तारपङ्क्तिश्च सप्तमस्यादितस्तृचः ॥१४॥
गायत्र्य उत्तरास्तिस्रः(घ) पार्जन्यं च त्रयोदशम्(ङ) ।
पञ्चमं(च) चोत्तमामेका(छ)मुद्धृत्यर्चमनुष्टुभम् ॥१५॥
उत्तमस्योत्तमा(ज)नुष्टुब्जगत्यष्टादशी(झ)निचृत् ।
एकविंशीत्रयोविंश्यौ(ञ) तथोभे सप्त(ट)चादितः ॥१६॥
अपोत्तमा तु सूक्तस्य प्रथमैका(ठ)स्त्यनुष्टुबृक् ॥

इति षष्ठं मण्डलम् ॥

---

(क) सू० ८८, ऋ० ५ । (ख) सू० ९६, ऋ० १, २ । (ग) सू० ९६, ऋ० ३ । (घ) सू० ९६, ऋ० ४, ५, ६ । (ङ) सू० १०२ । (च) सू० ९४ । (छ) सू० ९४, ऋ० १२ । (ज) सू० १०४, ऋ० २४ । (झ) सू० १०४, ऋ० १८ । (ञ) सू० १०४, ऋ० २१, २३ । (ट) सू० १०४, ऋ० १, २, ३, ४, ५, ६, ७ । (ठ) सू० १०३, ऋ० १ ।

# अथाष्टमं मण्डलम् ।

प्रथमस्यानुवाकस्य गायत्रे मण्डलेऽष्टमे ।
द्वित्रिष्टुबन्तं[क] प्रथमं द्विप्रगाथादि[ख] वार्हतम् ॥१॥
तृतीये[ग] च चतुर्थे[घ] च प्रगाथा वार्हता दृचाः ।
तृतीयस्य वृहत्यन्त्या[ङ] गायत्र्यौ द्वे उपोत्तमे[च] ॥२॥
पुरउष्णिक् चतुर्थस्य सूक्तस्यैकोत्तमा[छ] निचृत् ।
पञ्चमस्य तु सूक्तस्य वृहत्यौ द्वे उपोत्तमे[ज] ॥३॥
यं मे दुः[झ] स्वादवः सोमा[ञ] माकिरेने[ट] त्वनुष्टुभ. ।
तृतीयस्य[ठ] चतुर्थस्य[ड] सूक्ते आनुष्टुभे उभे ॥४॥
द्वितीयस्यानुवाकस्य तत्र काश्चिदृचोऽन्यथा ।
चतुर्थे सूक्ते प्रथमा[ढ] षष्ठी[ण] पञ्चदशी[त] च या ॥५॥
चतुर्दशी[थ] चतुर्थी[द] च वृहत्यः पञ्चमी[ध] ककुप् ।
त्रिष्टु[न] ब्विराड्[प] जगत्ये[फ]व दशमीप्रभृतिस्तृचः ॥६॥

---

(क) सू० १, ऋ० ३३, ३४ । (ख) सू० १, ऋ० १, २ । (ग) सू० १ ऋ० ३ । (घ) सू० १, ऋ० ४ । (ङ) सू० ३, ऋ० २४ । (च) सू० ३ ऋ० २२, २३ । (छ) सू० ४, ऋ० २१ । (ज) सू० ५, ऋ० ३७, ३८ । (झ) सू० ३, ऋ० २१ । (ञ) सू० २, ऋ० २८ । (ट) सू० ५, ऋ० ३९ । (ठ) सू० ८ । (ड) सू० ९, ऋ० १ । (ढ) सू० ९ । (ण) सू० ९, ऋ० ५ । (त) ९, ऋ० १५ । (थ) सू० ९, ऋ० १४ । (द) सू० ९, ४ । (ध) सू० ९, ऋ० ५ । (न) सू० ९, ऋ० १० । (प) सू० ९, ऋ० ११ ।(फ) सू० ९, ऋ० १२ ।

गायत्रौ परिशिष्टानां द्वितीयान्त्यौ[क] द्वृचावुभौ ।
पञ्चमस्य[ख] त्वृचाभ्यां मध्येज्योति[ग]रनुष्टुबृक्[घ] ॥७॥
आस्तारपङ्क्ति[ङ]र्बार्हतः[च] प्रगाथश्चैवमृग्विधिः ।
षष्ठस्य त्वृत्तमा[छ] त्रिष्टुप्धृतिश्चा प्रथमा[ज] निचृत् ॥८॥
द्वितीया[झ] वर्धमाना तु सूक्तमुत्तर[ञ]मौष्णिहम् ।
प्रथमश्च[ट] तृतीयश्च[ठ] षष्ठ[ड]श्चौष्णिहमेव हि ॥९॥
तृतीयस्यानुवाकस्य प्रगाथे काकुभे उभे ।
उत्तमोपोत्तमे[ढ] सूक्ते तत्र काश्चिदृचोऽन्यथा ॥१०॥
उपोत्तमे सप्तविंशी[ण] द्विपदैकोत्तमास्त्विमाः ।
उष्णि[त]क्सतोबृहत्यौ[थ] च ककु[द]प्पङ्क्ति[ध]श्च ता ऋचः ॥११॥
वास्तोष्पते ध्रुवे[न]त्येष प्रगाथो बार्हतो द्वृचः ।
चतुर्थस्यानुवाकस्य प्रगाथाः काकुभा नव[प] ॥१२॥
आद्ये सूक्ते द्वितीये तु वक्ष्यते विधिराश्विने ।
षट्.[फ] प्रगाथा बार्हताः प्रगाथाः काकुभास्त्रयः[ब] ॥१३॥

---

(क) सू० ९, ऋ० २, २१ । (ख) सू० १०, ऋ० १, ५ । (ग) सू० १०, ऋ० २ । (घ) सू० १० ऋ० ३ । (ङ) सू० १० ऋ० ४ । (च) सू० १० ऋ० ६ । (छ) सू० ११, ऋ० १० । (ज) सू० ११, १ । (झ) सू० ११ ऋ० २ । (ञ) सू० १२ । (ट) सू० १३ । (ठ) सू० १५ । (ड) सू० १८ । (ढ) सू० १९, २० । (ण) सू० १९, ऋ० २७ । (त) सू० १९, ऋ० ३४ । (थ) सू० १९, ऋ० ३५ । (द) सू० १९, ३६ । (ध) सू० १९, ३७ । (न) सू० १७, ऋ० १४, १५ । (प) सू० २१, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९ । (फ) सू० २२, ऋ० १, ३, ५ । (ब) सू० २२, ऋ० १३ १५, १६ ।

तेषां मध्ये बृहत्येका(क) त्वनुष्टुप्कार्कुभहृच:(ख) ।
ककुप्(ग)च मध्येज्योति(घ)स्तु पङ्क्तिमा औष्णिहान्यतः ॥१४॥
परं चत्वारि(ङ) सूक्तानि यानि विश्वमना जगौ ।
यत्वाष्टच्छाद्(च)युक्ष्वाहि त्व(छ)मुदुत्येते अनुष्टुभौ ॥१५॥
उष्णिग्गर्भा च गायत्री सूक्ते तावामुपोत्तमा(ज) ।
युवोःसूक्ते चतस्र(झ)श्च षोड़श्याद्या स्वचस्तथा ॥१६॥
उत्तमा(ञ) चैकविंशी(ट) च मताः पङ्क्त्यन्यो मताः ।
अग्निरुक्थे तु सूक्तस्य प्रगाथा वार्हता हृचाः(ठ) ॥१७॥
ये त्रिंशतीति सूक्तेऽस्मिंश्चतुर्थी(ड) पुरउष्णिग्वक् ।
उत्तमस्य द्वितीया(ढ) च तृतीया(ण) बृहती निचृत् ॥१८॥
अनुष्टुबुत्तमा(त)बभ्रु(थ)रेकस्तु द्वैपदं परम् ।
पञ्चमस्यानुवाकस्य सूक्तस्य प्रथमस्य तु ॥१९॥
दशम्येका(द)पादनिच्चतस्रो(ध)ऽन्यास्तु पङ्क्तयः ।
अग्निं वो(न)वीतिहोत्रे(प)त्यृचावेते अनुष्टुभौ ॥२०॥

---

(क) सू० २२, ऋ० १० । (ख) सू० २२, ऋ० ८, ६ । (ग) सू० २२, ऋ० ११ । (घ) सू० २२, ऋ० १२ । (ङ) सू० २३, २४, २५, २६ । (च) सू० २४, ऋ० ३० । (छ) सू० २६, ऋ० २० । (ज) सू० २५, ऋ० २३ । (झ) सू० २६, ऋ० १६, १७, १८, १६ । (ञ) सू० २६, ऋ० २५ । (ट) सू० २६, ऋ० २१ । (ठ) सू० २७, ऋ० १, ३, ५, ७, ६, ११, १३, १५, १७, १६, २१ । (ड) सू० २८, ऋ० ४ । (ढ) सू० ३०, ऋ० २ । (ण) सू० ३०, ऋ० ३ । (त) सू० ३०, ऋ० ४ । (थ) सू० २६ । (द) सू० ३१, ऋ० १० । (ध) सू० ३१, ऋ० १५, १६, १७, १८ । (न) सू० ३१, ऋ० १४ । (प) सू० ३१, ऋ० ६ ।

तृतीयश्च[क] चतुर्थश्च[ख] बार्हतानुष्टुभे तयोः ।
उभयोरेव गायत्रः षोडशी[ग]प्रभृतिस्तृचः ॥२१॥
अधः पञ्चस्य मे[घ]त्यैन्द्राबार्हतेऽनुष्टुबुत्तमा ।
उपरिष्टाज्ज्योतिष[ङ]न्तु पङ्क्तिस्सूक्तस्य पञ्चमी ॥२२॥
द्वाविंशत्या[च] च मध्येऽस्ति महा च बृहती[छ] तयोः ।
अविताशी[ज]ति प्रकर्थः पञ्चमहापङ्क्तिरुत्तमा[झ] ॥२३॥
जागतं यन्महापाङ्क्तं प्रेदं[ञ] सूक्तमिति स्मृतम् ।
तस्यैकातिजगत्याद्या[ट] महापांक्तानि तान्य[ठ]पि ॥२४॥
अग्निमस्तोष्यु[ड]पक्रम्य त्रीणि सूक्तानि तत्र तु ।
इन्द्राग्नी युव[ढ]मित्यस्य द्वितीया प्रकरी निचृत् ॥२५॥
त्रिष्टुबस्योत्तमा[ण]चैका सूक्तमस्माद्यदुत्तरम् ।
त्रैष्टुभा[त]नुष्टुभौ[थ] ज्ञेयौ तस्य पूर्वोत्तरौ तृचौ ॥२६॥
षष्ठस्य त्वनुवाकस्य महापाङ्क्तं वशात्परम्[द] ।
स्वादो[ध]स्तु त्रैष्टुभं सूक्तं जगती तत्र पञ्चमी[न] ॥२७॥

---

(क) सू॰३३। (ख) सू॰ ३४। (ग) सू॰ ३३,३४, ऋ॰ १६, १७, १८। (घ) सू॰ ३३, ऋ॰ १९। (ङ) सू॰ ३५। (च) सू॰ ३५, ऋ॰ २२, २४। (छ) सू॰ ३५, ऋ॰ २३। (ज) सू॰ ३६, ऋ॰ १, २, ३, ४, ५, ६। (झ) सू॰ ३६, ऋ॰ ७। (ञ) सू॰ ३७। (ट) सू॰ ३७, ऋ॰ १। (ठ) सू॰ ३७, ऋ॰ २, ३, ४, ५, ६, ७। (ड) सू॰ ३९, ४०, ४१। (ढ) सू॰ ४०, ऋ॰ २। (ण) सू॰ ४०, ऋ॰ १२। (त) सू॰ ४२, ऋ॰ १, २, ३। (थ) सू॰ ४२, ऋ॰ ४, ५, ६। (द) सू॰ ४७। (ध) सू॰ ४८। (न) सू॰ ४८, ऋ॰ ५।

ऊनत्रिंशी(क) त्रयोविंशी(ख) दशमी(ग) चोत्तमा(घ) च या।
षष्ठी(ङ) चैतास्तु गायत्र्यश्चतस्रस्त्वादितो(च) वर्गे ॥२८॥
त्रयोदशी तु द्विपदा(छ) त्रिंशी चानुष्टुब(ज)ष्टमी।
सतोबृहत्यौ(झ) षड्विंशी नवमी च स्मृते उभे ॥२९॥
द्वादशी लस्य सूक्तस्य विपरीते(ञ)ति सम्मता।
एकत्रिंशी विराडुष्णिक्(ट) पञ्चमी तु ककु(ठ)न्निचृत् ॥३०॥
दशीरेकण(ड)इति शेषा ककुम्न्यङ्कुशिरा(१)निचृत्।
द्वाविंशी चैकविंशी च चतुर्विंशी च पङ्क्तय.(ढ) ॥३१॥
उपोत्तमा च शिष्टाः स्युर्बृहत्योऽन्या वर्गे नव(ण)।
एषा पिपीलिका(त)मध्ये बृहत्यास्तु चतुर्दशी ॥३२॥
ये पातयन्ते ऽग्न्मभि(थ)रुपरिष्टाद्बृहत्यसौ।
विश्लेषा विषमपदा(द) विज्ञेया बृहतीष्वपि ॥३३॥
सप्तमस्यानुवाकस्य द्वे सूक्ते प्रथमे तयोः।

---

(१) न्यङ्कुशिरा इति क-चिह्नितपुस्तके पठ्यते। लिपिकरप्रमादकृतो-ऽयं पाठः।

---

(क) सू॰ ४६, ऋ॰ २९। (ख) सू॰ ४६, ऋ॰ २३। (ग) सू॰ ४६, ऋ॰ १०। (घ) सू॰ ४६, ऋ॰ ३३। (ङ) सू॰ ४६, ऋ॰ ६। (च) सू॰ ४६, ऋ॰ २, ३, ४, ५। (छ) सू॰ ४६, ऋ॰ १३, ३०। (ज) सू॰ ४६, ऋ॰ ८। (झ) सू॰ ४६, ऋ॰ ९, २६। (ञ) सू॰ ४६, ऋ॰ १२। (ट) सू॰ ४६, ऋ॰ ३१। (ठ) सू॰ ४६, ऋ॰ ५। (ड) सू॰ ४६, ऋ॰ १५। (ढ) सू॰ ४६, ऋ॰ २१, २२, २४। (ण) सू॰ ४६, ऋ॰ १, ७, ११, १८, १९, २५, २७, २८, ३२। (त) सू॰ ४६, ऋ॰ १४। (थ) सू॰ ४६, ऋ॰ १८। (द) सू॰ ४६, ऋ॰ २०।

आग्नेयैन्द्रे तथा भार्गे प्रगाथा[क] बार्हता[ख]स्तृचाः ॥२४॥
तृतीये बार्हतः पाङ्क्ते सप्तमी[ग]प्रभृतिस्तृचः ।
चतुर्थस्योत्तमा[घ] त्रिष्टुप्चतस्रोऽन्या[ङ] अनुष्टुभः ॥२५॥
प्रथमा च चतुर्थी च पञ्चमी सप्तमी च या ।
सप्तमेऽनुष्टुब[च]न्ते तु प्रगाथा बार्हता तृचाः ॥२६॥
आनुष्टुभास्तु चत्वारः[छ] प्रगाथा आदितस्तृचाः ।
नवमस्यैव सूक्तस्य सूक्ते त्वानुष्टुभे परे ॥२७॥
गायत्री द्विबृहत्यन्ते चतुर्थी[ज]प्रभृतिस्तृचः ।
द्वितीया पादतोऽनुष्टु[झ]बुष्णिगक्षरसम्पदा ॥२८॥
पङ्क्तिस्त्वेकादशी लक्ष[ञ] षोडशी[1] च निचृत्पदा ।
अष्टमस्यानुवाकस्य त्रिप्रगाथादि बार्हतम् ॥२९॥
ऐन्द्रं हि प्रथमं[ट] सूक्तं त्वार्षञ्च पुरुहन्मनः ।
तस्योष्णिक्पुरउष्णिहो[ठ]मध्येऽनुष्टु[ड]बुपोत्तमा[ढ] ॥४०॥
तृचाः प्रगाथा बार्हता द्वितीयस्योत्तमा[ण]स्त्रयः ।

(१) षोडशीति क चिह्नितपुस्तके पठ्यते ।

(क) सू० ४८, ऋ० १, ३, ५, ७, ९। (ख) सू० ४९, ऋ० २, ४, ६, ८, १०। (ग) सू० ५१, ऋ० ७, ८, ९। (घ) सू० ५२, ऋ० १०। (ङ) सू० ६१, ऋ० १, ४, ५, ७। (च) सू० ५५, ऋ० ५। (छ) सू० ६८, ऋ० १, ४, ७, १०। (ज) सू० ६९, ऋ० ४, ५, ६। (झ) सू० ६९, ऋ० २। (ञ) सू० ६९, ऋ० ११, १६। (ट) सू० ७०। (ठ) सू० ७०, ऋ० १३। (ड) सू० ७०, ऋ० १५। (ढ) सू० ७०, ऋ० १४। (ण) सू० ७१, ऋ० १०, ११, १२, १३ १४, १५।

आनुष्टुभास्तु चत्वारः[क] प्रगाथा आदितस्तृचाः ॥४१॥
पञ्चमस्योत्तमास्त्वास्य तिस्रो[ख]ऽनुष्टुभ ईरिताः।
विश्वेत्ता विष्णु[ग]रित्येष प्रगाथो बार्हतो द्वृचः ॥४२॥
नवमप्रभृतीनान्तु सूक्तानां पृथगुत्तमाः।
बृहत्य[घ]नुष्टु[ङ]स्त्रिष्टुप्[च] च त्रयाणां कथिता स्तृचः ॥४३॥
नवमस्यानुवाकस्य प्रगाथा बार्हता द्वृचाः।
ज्ञेयाश्चतुर्णां सूक्तानां षष्ठा[छ]द्वै जागतात्परम् ॥४४॥
आनुष्टुभो बृहत्यन्तस्तृचो यज्ञा यथा[ज] इति।
आनुष्टुभं त्रिपङ्क्त्यादि कन्या वाः[झ] सूक्तमुत्तरम् ॥४५॥
पान्त[ञ]मित्यस्य सूक्तस्य प्रथमैका त्वनुष्टुबृक्।
दशमस्यानुवाकस्य सप्तमे त्रैष्टुभे पुनः ॥४६॥
षष्ठ्ये[ट]का जगती तस्याः पर आनुष्टुभस्तृचः[ठ]।
आनुष्टुभा द्वितीया[ड] द्वे परे त्रैष्टुभबार्हते[ढ] ॥४७॥
अनयोस्त्रैष्टुभे सूक्ते या चतुर्थी विराड्[ण]सौ।
उभौ त्वतिजगत्यादी[त] बार्हतस्योत्तमे द्वृचौ[थ] ॥४८॥

---

(क) सू० ७४, ऋ० १, ४, ७, १०। (ख) सू० ७४, ऋ० १३, १४, १५। (ग) सू० ७७, ऋ० १०, ११। (घ) सू० ७८, ऋ० १०। (ङ) सू० ७९, ऋ० ९। (च) सू० ८०, ऋ० ८। (छ) सू० ८६। (ज) सू० ८९, ऋ० ५, ६, ७। (झ) सू० ९१। (ञ) सू० ९२, ऋ० १। (ट) सू० १००, ऋ० ६। (ठ) सू० १००, ऋ० ७, ८, ९। (ड) सू० ९५। (ढ) सू० ९६, ९७। (ण) सू० ९६, ऋ० ४। (त) सू० ९७, ऋ० १०, १२। (थ) सू० ९७, ऋ० ९।

उपरिष्टाद्बार्हतयोस्तयोः पूर्व.(क) प्रतीयताम् ।
उत्तरस्य तृचस्याद्या(ख) त्रिष्टुबन्त्या(ग) जगत्यपि ॥४९॥
*प्रगाथं बार्हतं सूक्तं षष्ठं पञ्चममौष्णिहम्*(घ) ।
अन्त्यानवम्यौ(ङ) सूक्तेऽस्मिन् पञ्चमे पुरउष्णिहौ ॥५०॥
उपोत्तमे सप्तमे च चतस्र.(च) काकुभाः स्मृताः ।
अष्टमे त्रित्रिष्टुबन्ते(छ) प्रगाथा बार्हता तृचा.(ज) ॥५१॥
गायत्री तु तृतीया(झ)च बृहत्यन्या त्रयोदशी(ञ) ।
एका सतोबृहत्यस्य चतुर्थी(ट) सा प्रतीयताम् ॥५२॥
उत्तमस्योत्तमा(ठ)नुष्टुब्विराड्रूपा तु पञ्चमी(ड) ।
सतोबृहत्यस्तस्यैव सप्तम्याद्ययुजस्तृच.(ढ) ॥५३॥
ककुब्गायत्री च ककुबष्टम्यादौ युजस्तृच.(ण) ।
अन्याः शिष्टा बृहत्यस्तु विज्ञेयास्तत्र चादित.(त) ॥५४॥

इति अष्टमं मण्डलम् ।

---

(क) सू० ९७, ऋ० ११ । (ख) सू० ९७, ऋ० १४ । (ग) सू० ९७, ऋ० १५ । (घ) सू० ९८, ९९ । (ङ) सू० ९८, ऋ० ९, १२ । (च) सू० ९८, ऋ० ७, ८, १०, ११ । (छ) सू० १०१, ऋ० १४, १५, १६ । (ज) सू० १०१, ऋ० २, ४, ६, ८, १०, १२ । (झ) सू० १०१, ऋ० ३ । (ञ) सू० १०१, ऋ० १३ । (ट) सू० १०१, ऋ० ४ । (ठ) सू० १०३, ऋ० १४ । (ड) सू० १०३, ऋ० ५ । (ढ) सू० १०३, ऋ० ७, ९, ११ । (ण) सू० १०३, ऋ० ८, १०, १२ । (त) सू० १०३, ऋ० १, २, ३, ४, ६, १३ ।

# अथ नवमं मण्डलम्।

गायत्रं पावमानीनां षष्ठि सूक्तानि सप्त च।
पञ्चमस्यात्र सूक्तस्य चतस्रो[क]ऽन्त्या अनुष्टुभः ॥१॥
पवस्व सोममन्दयं[ख]न्नित्येष द्वैपदस्तृचः।
अतिवारान्[ग]लाय्यस्य[घ] द्वे एते पुरउष्णिहौ ॥२॥
उपोत्तमस्य चानुष्टुप्सूक्तस्याष्टादशी[ङ] विराट्।
सप्तविंशु[च]त्तमे च द्वे तिस्रोऽनुष्टुभ[छ] उत्तमे ॥३॥
अतः पराणि सूक्तानि[ज] जागता.[1] प्राक् प्रतुद्रवात्।
एका त्रिष्टुभमुद्धृत्य सप्तमस्याष्टमी[झ]मृचम् ॥४॥
चतुर्दश[ञ] पञ्चदश[ट] चत्वारि[ठ] च तथादित.[ड]।
एतानि त्रिष्टुबन्तानि जागतेष्विति गम्यताम् ॥५॥
द्वित्रिष्टुबन्तो तत्रापि द्वितीयाष्टादशे[ढ] उभे।
त्रैष्टुभानि पराणि[ण] प्रागभि नो वाजसातमात् ॥६॥

---

(१) जागतानीति भवितुमर्हति।

---

(क) सू० ५, ऋ० ८, ९, १०, ११। (ख) सूक्त, ०१६, '१७०६। १८। (ग) सू० ६०, ऋ० ३। (घ) सू० ६७, ऋ० ३०। (ङ) सू० ६६, ऋ० १८। (च) सू० ६७, ऋ० २७। (छ) सू० ६७, ऋ० ३१, ३२। (ज) सू० ६८, ६९, ७०, ७१, ७२, ७३, ७४, ७५, ७६ ७७, ७८, ७९, ८०, ८१, ८२, ८३, ८४, ८५, ८६। (झ) सू० ७४, ऋ० ८। (ञ) सू० ६८, ऋ० १०। (ट) सू० ६९, ऋ० १०। (ठ) सू० ७०, ऋ० १०। (ड) सू० ७१, ऋ० ९। (ढ) सू० ८५, ऋ० ११, १२। (ण) सू० ८७, ८८, ८९, ९०, ९१, ९२, ९३, ९४, ९५, ९६, ९७।

चत्वार्यानुष्टुभान्यू[क]र्ध्वं तेभ्यः पञ्चौष्णिहानि[ख] च ।
मे + + + + + + ॥७॥
+ + + + स्य बृहत्योर्द्वादशी[ग] तयोः ।
षोड़शर्चस्य गायत्री[घ] द्वितीयोत्तरया सह ॥८॥
परीतो ऽपिष्ठते[ङ]त्यस्मिन् प्रगाथा बार्हता तृचाः ।
षोड़शी च तृतीया च द्वे अस्य द्विपदे[च]उभे ॥९॥
अष्टमी च बृहत्य[छ]स्य नवमी च निचृत्पदा[ज] ।
प्रगाथ काकुभ[झ] सूक्त शतोबृहती यस्य न[ञ] ॥१०॥
यवमध्या तु गायत्री स सुन्व[ट] इति काकुभे ।
त्रैष्टुभ त्रिविराड़[ठ]न्तमूर्ध्ववार्हत.[ड] परम् ॥११॥
तस्मिन् पिपीलिकामध्या[ढ]स्तिस्रोऽनुष्टुभ आदितः ।
अया रुचे[ण]त्यथात्यष्ट पाङ्क्तानि[त] चौष्णतः परम् ॥१२॥

इति नवम मण्डलम् ।

---

(क) सू० ९८, ९९, १००, १०१ । (ख) सू० १०२, १०३, १०४, १०५, १०६ । (ग) सू० ९६, ऋ० १२ । (घ) सू० १०१, ऋ० २, ३ । (ङ) सू० १०७ । (च) सू० १०७, ऋ० ३, १६ । (छ) सू० १०७, ऋ० ८ । (ज) सू० १०७, ऋ० ९ । (झ) सू० १०८ । (ञ) सू० १०८, ऋ० १४, । (ट) सू० १०८, ऋ० १३ । (ठ) सू० ११०, ऋ० १०, ११, १२ । (ड) सू० ११०, ऋ० ४, ५, ६, ७, ८, ९ । (ढ) सू० ११०, ऋ० १, २, ३ । (ण) सू० १११ । (त) सू० ११२, ११३, ११४ ।

# अथ दशमं मण्डलम्।



त्रैष्टुभाः[क] क्षुद्रसूक्तानामनुवाके दशोत्तराः।
तेषामाद्यस्य नवमे गायत्र्येऽन्ते त्वनुष्टुभौ[ख] ॥१॥
एकादशे पञ्चदशे षड्[ग]चैकादश्यृ[घ]गादितः।
त्रयोदशस्थे[ङ]कान्त्या जगत्यस्ता निचृत्पदाः ॥२॥
चतुर्दशस्य सूक्तस्य बृहत्ये[च]का ह्युपोत्तमा।
त्रयोदशीचतुर्दश्यावुत्तमा चेत्यनुष्टुभः[छ] ॥३॥
उत्तमस्य तु सूक्तस्य चतस्रोऽन्त्या अनुष्टुभः[ज]।
द्वितीयस्यानुवाकस्य सूक्तमानुष्टुभं[झ] विदुः ॥४॥
तृतीयं यदि ह्यष्टर्चं षष्ठ्या गायत्र्या[ञ] विना।
अनुष्टु[ट]प्तु द्वितीयस्य प्रथमस्य च योत्तमा ॥५॥
एकादशी द्वितीयस्य ततः प्रस्तारपङ्क्ति[ठ]श्चैक्।
उपोत्तमा तु पूर्वस्य पुरस्ताद्बृहती[ड] विराट् ॥६॥

---

(क) सू० १, २, ३, ४, ५, ६, ७, ८, ९, १०। (ख) सू० ९, ऋ० ८, ९। (ग) सू० ११, ऋ० १, २, ३, ४, ५, ६। (घ) सू० १५, ऋ० ११। (ङ) सू० १३, ऋ० ५। (च) सू० १४, ऋ० १५। (छ) सू०, १२, ऋ० १३, १४, १६। (ज) सू० १६, ऋ० ११, १२, १३, १४। (झ) सू० १९, २०, २१, २२, २३, २४, २५, २६। (ञ) सू० १९, ऋ० ६। (ट) सू० १७, ऋ० १४। सू० १८, ऋ० १४। (ठ) सू० १८, ऋ० ११। (ड) सू० १७, ऋ० १३।

उपान्त्या तु द्वितीयस्य षष्ठी या सप्तमस्य च ।
षष्ठी न्वस्येति तिस्रश्च जगत्यः(क) पञ्च ता इमाः ॥७॥
पञ्चमी तस्य सूक्तस्य त्रिष्टुबे(ख)वाभिचारिणी ।
ऊर्ध्वमानुष्टुभादाद्या विमदस्य दशाचरा(ग) ॥८॥
अनुष्टुप्(घ) च द्वचौ च द्वौ गायत्रौ(ङ) नवमी विराट्(च) ।
विमदस्य महोदर्काः सर्वा आस्तारपङ्क्तयः(छ) ॥९॥
षष्ठे पुरस्ताद्बार्हते(ज) त्रिष्टुब(झ)न्ते कुह श्रुते ।
त्वन्या चिदानस्त्वं नस्तु तिस्र एता अनुष्टुभः(ञ) ॥१०॥
आनुष्टुभं(ट) तु दशमं तत्र प्रथमया सह ।
वर्षिमेमी महीत्युष्णिगा(ठ)नुष्टुभे(ड)व पादतः ॥११॥
अन्त्य एवानुष्टुभ् सोऽपि युवं प्रक्षे(ढ)ति यस्तृचः ।
तृतीयस्यानुवाकस्य प्र सु ग्मन्तेति पञ्च च ॥१२॥
सप्तमी चाद्यसूक्तस्य जगत्यः(ण) षड्मिमा ऋचः ।
चतुर्थस्य तु सूक्तस्य द्वितीयप्रभृतिर्तृचः ॥१३॥

---

(क) सू० १८, ऋ० १३, । सू० २३, ऋ० २, ३, ४, ६। (ख) सू० २६, ऋ० ५। (ग) सू० २०, ऋ० १। (घ) सू० २०, ऋ० २। (ङ) सू० २०, ऋ० ३, ४, ५, ६, ७, ८। (च) सू० २०, ऋ० ९। (छ) सू० २१, २२, २३, २४, २५, २६। (ज) सू० २२, ऋ० १०, ११, १२, १३, १४। (झ) सू० २२, ऋ० १५। (ञ) सू० २२, ऋ० ५, ७, ९। (ट) सू० २६। (ठ) सू० २६, ऋ० १, ४। (ड) सू० २६, ऋ० ३, ५, ९। (ढ) सू० २४, ऋ० ४, ५, ६। (ण) सू० ३२, ऋ० १, २, ३, ४, ५। सू० ३३, ऋ० ७।

प्रगाथो वार्हत[क]स्तस्मात्परा गायत्र्य[ख]स्तु षट्।
जागतान्य[ग]स्य सूक्तानि पञ्चमादधि सप्त तु ॥१४॥
एकां त्रिष्टुभ[घ]मुद्धृत्य सौर्यस्य दशमीमृचम्।
षष्ठसप्तमयोश्चान्ते[ङ] दशमस्य च तृत्तमाम्[च] ॥१५॥
चतुर्थस्यानुवाकस्य जागते[छ] प्रथमे उभे।
उद्धृत्यान्ये तयोः पूर्वां तिस्रश्चादित उत्तरात् ॥१६॥
षष्ठञ्च सप्तमञ्चैते जागते[ज] तत्र षट्तः।
उद्धृत्यान्ये सप्तमीञ्च द्वितीयान्त्ये च सप्तमात् ॥१७॥
अष्टमस्य च सूक्तस्य जागत[झ]स्तृत्तमो तृचः।
एते लत्राभिसारिण्यौ[ञ] के ते नर इति द्वमौ ॥१८॥
पञ्च चैकादशिन्यान्त्या जगत्य[ट]स्त्वष्टमीं विना।
चतुर्दशस्य जागत[ठ]श्चतुर्थीप्रभृतिस्तृचः ॥१९॥
गायत्र्यानुष्टुभे[ड] सूक्ते मा प्रयत्त इति द्वुभे।
आजनं लस्य पश्चादौ गायत्र्यो[ढ]ऽनुष्टुभः[ण] पराः ॥२०॥

---

(क) सू० ३३, ऋ० २, ३। (ख) सू० ३३, ऋ० ४, ५, ६, ७, ८, ९। (ग) सू० ३५, ३६, ३७, ३८, ३९, ४०, ४१। (घ) सू० ३७, ऋ० १०। (ङ) सू० ३५, ऋ० १३, १४। सू० ३६, ऋ० १३, १४। (च) सू० ३९, ऋ० १४। (छ) सू० ४३, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९। सू० ४४, ऋ० ४, ५, ६, ७, ८, ९। (ज) सू० ४८, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९। सू० ४९, ऋ० १, ३, ४, ५, ६, ७, ८, ९, १०। (झ) सू० ५०, ऋ० ६, ७। (ञ) सू० ५०, ऋ० ३, ४। (ट) सू० ५३, ऋ० ६, ७, ९, १०, ११। (ठ) सू० ५६, ऋ० ४, ५, ६। (ड) सू० ५७, ५८। (ढ) सू० ६०, ऋ० १, २, ३, ४, ५। (ण) सू० ६०, ऋ० ६, ७, १०, ११, १२।

शं रोदसी यथा युगं यथेयमिति पङ्क्तयः[क] ।
अव द्वके इति ह्येका महापङ्क्ति[ख]र्हि षट्पदा ॥२१॥
विराट्पूर्वा[ग] समिन्द्रेति त्रिष्टुप्पङ्क्त्युत्तरैव वा ।
पञ्चमस्यानुवाकस्य चत्वारि प्रागुपोत्तमा ॥२२॥
जागतान्यृ[घ]चमुद्धृत्य यां मे धिय[ङ]मिति त्विमाम् ।
पूर्वयोरुत्तमे[च] चर्चौ परयोश्चोत्तमा[छ]मृचम् ॥२३॥
द्वितीयेऽनुष्टुब[ज]ष्टम्या नवम्या सह पञ्चमी ।
तृचोऽस्य षष्ठीप्रभृतिः प्रगाथो बार्हतो[झ]मतः ॥२४॥
दशमी त्वस्य गायत्री[ञ] जगत्यो[ट]ऽन्या विनोत्तमाम् ।
षष्ठस्य त्वनुवाकस्य जागते[ठ] सप्तमाष्टमे ॥२५॥
नवमी च तृतीयस्य प्रथमे चादितो तृचः ।
नवमस्य पञ्चमी च दशमस्य च जागतः[ड] ॥२६॥
ज्ञेयो द्वितीयया साकं पञ्चमीप्रभृतिस्तृचः ।
उपोत्तमस्य सूक्तस्य तथा प्रथमया सह ॥२७॥

---

(क) सू० ५९, ऋ० ८ । सू० ६०, ऋ० ८, ९ । (ख) सू० ५९, ऋ० ९ । (ग) सू० ५९, ऋ० १० । (घ) सू० ६३, ६४, ६५, ६६ । (ङ) सू० ६४, ऋ० १२ । (च) सू० ६२, ऋ० १०, ११ । सू० ६३, ऋ० १६, १७ । (छ) सू० ६५, ऋ० १५ । सू० ६६, ऋ० १५ । (ज) सू० ६२, ऋ० ५, ८, ९ । (झ) सू० ६२, ऋ० ६, ७ । (ञ) सू० ६२, ऋ० १० । (ट) सू० ६२, ऋ० १, २, ३, ४ । (ठ) सू० ७५, ७६ । (ड) सू० ७१, ऋ० ९ । सू० ६९, ऋ० १, २ । सू० ७७ ऋ० ५ । सू० ७८, ऋ० २, ५, ६, ७ । सू० ८३, ऋ० १ ।

उत्तमस्य चतस्रोऽन्त्या जगत्य[क] इति गम्यताम्।
सप्तमस्यानुवाकस्य आद्यमानुष्टुभं[ख] स्मृतम् ॥२८॥
अस्मिन् नवो नवस्तिस्रो द्वे द्वे त्वम्णाम्यनूचराः।
यदश्विनाघोरचक्षुः पूषा त्वा त्रिष्टुभो[ग] दश ॥२९॥
आ नः प्रजां जगत्य[घ]स्ताः पूर्वापरमिह प्रियम्।
दृष्टमेतदि[ङ]ति ह्येषा बृहती न्यङ्कुसारिणी ॥३०॥
षष्ठञ्चानुष्टुभं[च] सूक्तं तस्यैका त्रिष्टुबु[छ]त्तमा।
तृतीयस्य च सूक्तस्य चतस्रोऽन्त्या अनुष्टुभः[ज] ॥३१॥
पाङ्क्त[झ]मस्य द्वितीयन्तु तत्राप्येवं निबोधिता।
अष्टमस्यानुवाकस्य प्रथमे जागते[ञ]उभे ॥३२॥
तथा चतुर्थे[ट] षष्ठञ्च[ठ] पूर्वादुद्धृत्य तूत्तमाम्[ड]।
चतुर्थात्पञ्चमीं चान्त्यां सप्तमी[ढ] च व्यपास्य तु ॥३३॥
षष्ठादन्त्या[ण]स्तु तिस्रश्च भिषगानुष्टुभं[त] परम्।
महि[थ]प्रस्तारपाङ्क्ते तु पुरस्ताद्बृहती[द] परा ॥३४॥

---

(क) सू० ८४, ऋ० ४, ५, ६, ७। (ख) सू० ८५। (ग) सू० ८५, ऋ० १४, १९, २०, २१, २३, २४, २६, ३६, ३७, ४४। (घ) सू० ८५, ऋ० १८, २७, ४३। (ङ) सू० ८५, ऋ० ३४। (च) सू० ९०। (छ) सू० ९०, ऋ० १५। (ज) सू० ८७, ऋ० २२, २३, २४, २५। (झ) सू० ८६। (ञ) सू० ९१, ९२। (ट) सू० ९४। (ठ) सू० ९६। (ड) सू० ९१, ऋ० १५। (ढ) सू० ९४, ऋ० ५, ७, १४। (ण) सू० ९६, ऋ० ११, १२, १३। (त) सू० ९७। (थ) सू० ९३। (द) सू० ९३, ऋ० १५।

यज्ञे यज्ञे च विश्वेषां वावर्त्त ता अनुष्टुभः[क] ।
न्यङ्कुसारिण्ये तं यंसं[ख] ऋधनः पङ्क्तिरन्तरे:[ग] ॥२५॥
नवमस्यानुवाकस्य षष्ठसूक्तमिहोष्णिहम्[घ] ।
तस्मिन् पिपीलिकामध्ये[ङ] हरी वज्रमिमे ह्युचौ ॥२६॥
प्रथमा वास्य गायत्री[च] त्रिष्टुब[छ]स्योत्तमा पुनः ।
नवम्यन्ते द्वितीयस्य चतुर्थी चाष्टमस्य च ॥२७॥
सोदर्कस्येन्द्र दृक्षेति जगत्य[ज]स्ताश्चतुर्दश ।
मध्येगायत्र्यो[झ] बृहती[ञ] निरा ह्यावानिति द्वयोः ॥२८॥
मुद्गलस्य बृहत्या[ट]द्या तृतीया चोत्तमा च या ।
पुनर्वै प्रेता जयता पुनर्दायेत्यनुष्टुभः[ठ] ॥२९॥
दशमस्यानुवाकस्य गायत्री[ड] षष्ठसप्तमे ।
प्रथमं जागतं[ढ] सूक्तं मक्षार्यन्त[ण]स्त्र चित्र इत् ॥४०॥
उद्धृत्य प्रथमादन्या[त] मितरस्मादुपोत्तमाम्[थ] ।
द्वितीयस्य चतुर्थ्येका जगती[द] चाच कथ्यते ॥४१॥

---

(क) सू० ९२, ऋ० २, ३, १२। (ख) सू० ९३, ऋ० ११। (ग) सू० ९३, ऋ० ९। (घ) सू० १०५। (ङ) सू० १०५, ऋ० २, ७। (च) सू० १०५, ऋ० १। (छ) सू० १०५, ऋ० ११। (ज) सू०१००, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११। सू० १०१, ऋ० ९, १२। सू० १०७, ऋ० ४। (झ) सू० १०१, ऋ० ४, ६। (ञ) सू० १०१, ऋ० ५। (ट) सू० १०२, ऋ० १, ३, १२। (ठ) सू० १०२, ऋ० १३। सू० १०९, ऋ० ६, ७,। (ड) सू० ११८, ११९। (ढ) सू० ११३। (ण) सू० ११५, ऋ० ९। (त) सू० ११३, ऋ० १०। (थ) सू० ११५, ऋ० ८। (द) सू० ११४, ऋ० ४। सू० ११५, ऋ० १, २, ३, ४, ५, ६, ७।

पञ्चमस्य च सूक्तस्य जागत[क]स्त्वादिमो तृचः।
जागतं[ख] दशमं सूक्तमुद्धृत्याद्यास्तु पञ्चमीम् ॥४२॥
वाक्सूक्तस्य द्वितीया च द्वादशस्य च सप्तमी।
उत्तमा च विहव्यस्य जगत्य[ग]स्ता इमा ऋचः ॥४३॥
चतुर्दशं तूपरिष्टाद्बार्हतं[घ] तद्विनोत्तमाम्।
रात्रीसूक्तं तु गायत्र[ङ] मेवमत्रापि गम्यताम् ॥४४॥
एकादशेऽनुवाके तु द्वितीयं[च] जगतीमुखम्।
तृतीयस्य च सूक्तस्य चतुर्थ्येका त्वनुष्टु[छ]बृक् ॥४५॥
चतुर्थस्य च सूक्तस्य प्रथमा न्यङ्कुसारिणी[ज]।
उपाद्योपान्त्ये प्रस्तारपङ्क्ती[झ] एवावगम्यताम् ॥४६॥
महासतोबृहत्य[ञ]न्त्या विराड्रूपास्तु[ट]शेषिताः।
प्राकार[ठ]महापाङ्क्तौ[ड] तु पञ्चमस्यादितस्तृचौ ॥४७॥
सप्तम्यं तु त्वमिन्द्रेति त्रिष्टुब[ढ]न्त्या निचृत्पदा।
षष्ठं सूक्तं महापाङ्क्तं[ण] तस्यैका पङ्क्ति[त]रुत्तमा ॥४८॥

---

(क) सू॰ ११७, ऋ॰ १, २। (ख) सू॰ १२२, ऋ॰ २, ३, ४, ५, ६, ७, ८। (ग) सू॰ १२४, ऋ॰ ७। सू॰ १२५, ऋ॰ २। सू॰ १२८, ऋ॰ ८। (घ) सू॰ १२६, ऋ॰ १, २, ३, ४, ५, ६, ७। (ङ) सू॰ १२७। (च) सू॰ १३०, ऋ॰ १। (छ) सू॰ १३१, ऋ॰ ४। (ज) सू॰ १३२, ऋ॰ १। (झ) सू॰ १३२, ऋ॰ २, ६। (ञ) सू॰ १३२, ऋ॰ ७। (ट) सू॰ १३३, ऋ॰ ३, ४, ५। (ठ) सू॰ १३३, ऋ॰ १, २, ३। (ड) सू॰ १३४, ऋ॰ ४, ५, ६। (ढ) सू॰ १३३, ऋ॰ ७। (ण) सू॰ १३४। (त) सू॰ १३४, ऋ॰ ७।

आनुष्टुभान्य[क]तस्तोपि दशमन्त्वथ जागतम्[ख] ।
सूक्ते तु द्वादशे षष्ठी त्रिष्टु[ग]ज्ज्योतिष्मतीविराट्[घ] ॥४९॥
सतोबृहत्य[ङ]स्तिस्रोऽन्त्या आद्ये विष्टारपङ्क्तिके[च](१) ।
ह्यनुष्टुब[छ] तदाग्नेय द्विजगत्या[ज]दि सूक्तयो ॥५०॥
मध्ये चतुर्दश सूक्त तदानुष्टुभयो[झ]र्द्वयोः ।
गायत्री[ञ] बृहती[ट]ज्ञेया सूक्ते गायत्र्यौ[ठ]परे ॥५१॥
सतो बृहत्युपान्त्यान्त्या पङ्क्ति[ड]र्विष्टारपूर्विका ।
आनुष्टुभे[ण]परे च द्वे जागत[त] तदनन्तरम् ॥५२॥
तेषा पूर्वन्तु पश्यन्त[थ] त्रिष्टुबन्त[द] तु जागतम् ।
उपोत्तमस्य सूक्तस्य बृहत्य[ध]स्तिस्र आदितः ॥५३॥
उपरिष्टाज्ज्योतिष्मती[न] विज्ञेये उत्तरे ऋचौ ।
उपान्त्या जगती[प] वास्या दशानुष्टुभ[फ] मुत्तरम् ॥५४॥

---

(१) अन्त्योपरिष्टाज्ज्योतिस्तु द्वादशस्यादितो द्वच ।
विष्टारभाक् त्रिष्टुप्तु सतोबार्हतस्तृच ॥ इति पाठान्तरम् ।

---

(क) सू० १३५, १३६, १३७ । (ख) सू० १३८ । (ग) सू० १४०, ऋ० ६ । (घ) सू० १४०, ऋ० ५ । (ङ) सू० १४०, ऋ० २, ३, ४ । (च) सू० १४०, ऋ० १ । (छ) सू० १४२, ऋ० ७, ८ । (ज) सू० १४२, ऋ० १२ । (झ) सू० १४१, १४३ । (ञ) सू० १४४, ऋ० १ । (ट) सू० १४४, ऋ० २ । (ठ) सू० १४४, ऋ० ३, ४ । (ड) सू० १४४, ऋ० ५ । (ढ) सू० १४४, ऋ० ६ । (ण) सू० १४५, १४६ । (त) सू० १४७ । (थ) सू० १४५, ऋ० ६ । (द) सू० १४७, ऋ० ५ । (ध) सू० १५०, ऋ० १, २, ३ । (न) सू० १५०, ऋ० ४, ५ । (प) सू० १५०, ऋ० ४ । (फ) सू० १५१ ।

अतोऽन्यत्त्रैष्टुभं(क) सर्वं यदनुक्तमिहापि तत् ।
उत्तमस्यानुवाकस्य तुभ्येदमिति जागतम्(ख) ॥५५॥
तथैवास्तारपङ्क्त्य(ग)न्तं विभ्राडिति च जागतम्(घ) ।
पञ्चमञ्च द्वितीयञ्च सप्तमं विंशमेव च ॥५६॥
गायत्राणि(ङ) प्रवश्चैव महीत्यादीनि पञ्च च ।
एकविंशञ्च षष्ठञ्च द्वे चास्य द्वैपदे(च) उभे ॥५७॥
त्रैष्टुभं(छ) तु विराडादि द्वैपदं षष्ठमेतयोः ।
एतानि त्रैष्टुभान्य(ज)स्य नवमं दशमं तथा ॥५८॥
चतुर्दशं सप्तदशं तथैवाष्टादशं च यत् ।
पतङ्गादीनि सूक्तानि त्रैष्टुभान्ये(झ)व सप्त तु ॥५९॥
जगत्यानुष्टुभा(ञ) चाद्ये तेषामाद्यतृतीययोः ।
पूर्वेषु पञ्चवर्गेषु दशमेऽनुष्टु(ट)बुत्तमा ॥६०॥
शिष्टान्यनुष्टुभान्ये(ठ)व सूक्तान्यस्य चतुर्दश ।
आनुष्टुभेष्वपेहीति सूक्ते पङ्क्ति(ड)रिहोत्तमा ॥६१॥

---

(क) सू० १४७, १४८, १४९ । (ख) सू० १६९ । (ग) सू० १७०, ऋ० ४ । (घ) सू० १७०, ऋ० १, २, ३ । (ङ) सू० १५३, १५६, १५८, १७१, १७५, १८५, १८६, १८७, १८८, १८९ । (च) सू० १५७, १७२ । (छ) सू० १५७ । (ज) सू० १६०, १६१, १६५, १६८, १६९ । (झ) सू० १७७, १७८, १७९, १८०, १८१, १८२, १८३ । (ञ) सू० १५२, १५४ । (ट) सू० १६१, ऋ० ५ । (ठ) सू० १५२, १५४, १५५, १५९, १६२, १६३, १६४, १६६, १७३, १७४, १७६, १८४, १९०, १९१ । (ड) सू० १६४, ऋ० ५ ।

तथा द्वितीया गायत्री(क) प्रसूनव इति लिङ्गं ।
संसमित्युत्तमे सूक्ते तृतीया त्रिष्टुबे(ख)व च ॥६२॥
छन्दांस्येवमेषाण्यनुकीर्त्तितानि
गायत्र्यादीनि चतुर्दशानि ।
तत्तद्विशेषैः सहवैदिकानि
कल्याणदायीनि भवन्तु मह्यम् ॥६२॥
इति शौनकाचार्यविरचिता छन्दोऽनुक्रमणी समाप्ता ॥

---

(क) सू० १७६, ऋ० २। (ख) सू० १९१, ऋ० ३।

# अथ अनुवाकानुक्रमणी ।



पितृदेवर्षिसाध्येभ्यो ब्राह्मणेभ्यश्च सर्वशः ।
आचार्येभ्यो गुरुभ्यश्च प्रणम्य प्रयतः शुचिः ॥१॥
मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्हि तपोबलात् ।
दृष्टानामनुवाकानामृचु वक्ष्याम्यतन्द्रितः ॥२॥
आदौ सूक्तपरीमाणं सङ्ख्याञ्च क्रममेव च ।
मण्डले मण्डले चैव यावन्तो हि समीरिताः ॥३॥
सूक्तसङ्ख्यानुवाकानां सूक्तानामृक्समाहिताः ।
पादाक्षरसमाम्नायं छन्दस्येव प्रतिष्ठितम् ॥४॥
एकैकमनुवाकन्तु खिलानि ब्राह्मणानि तु ।
संवत्सरे संवत्सरे पठेदहरहः शुचिः ॥५॥
श्रावणस्य तु मासस्य पौर्णमास्यामुपक्रमः ।
समाप्य तर्पयेद्देवान् पितॄनृषीननुक्रमात् ॥६॥
ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमम् ।
प्रमाणमनुवाकानां सूक्तैः शृणुत शाकलाः ॥७॥
कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च ।
वसिष्ठकश्यपावभ्रश्चा जमदग्निरथोत्तमः ॥८॥
अग्निमीळे[1] त्रिसूक्तन्तु सुरूपे[2]न्द्र[3]चतुःसूक्तौ ।

---

(अनु० १) म० १, सू० १—३। (अनु० २) म० १, सू० ४—७।
(अनु० ३) म० १, सू० ८—११।

अग्निं[४] समान[५]मित्येतौ षट्कौ कण्वे[६]ति सप्तकः ॥८॥
त्वमग्ने[७] पञ्चकं विद्यान्न चोयज्ञ[८]मथाष्टकम् ।
अग्ने विवस्वद्[९]भित्यं[१०] मूचित्ते[११] सप्तकास्त्रयः ॥१०॥
पश्वा न[१२]नवकं विद्यादुपप्रयन्तो [१३]दशैकञ्च ।
खैलिकानामनादेशे अस्मिन् ग्रन्थेऽनुवाकानाम् ॥११॥
यस्तु चर्चायते वेदे तस्य सङ्ख्येति नः श्रुतिः ।
प्र ये शुम्भन्ते[१४] नवकमिम[१५] द्वादशकं विद्यात् ॥१२॥
इन्द्रं मित्रं [१६]दशैवाथ नासत्याभ्या[१७]न्तु पञ्चकम् ।
कदित्था[१८]षट् परः सप्ताग्नि[१९]मा त्वा जुवः [२०]पङ्क्तम् ॥१३॥
वेदिषदे[२१] सप्तदशाबोधी[२२]त्यष्टौ सूक्तानि ।
कया[२३]त्रिपञ्चसूक्तस्तु युवो[२४]र्द्वादशकं विद्यात् ॥१४॥
इत्याद्ये मण्डले दृष्टाश्चत्वारो विंशतिश्च वै । •

---

(अनु० ४) म० १, सू० १२—१७ । (अनु० ५) म० १ सू० १८—२३ ।
(अनु० ६) म० १ सू० २४—३० । (अनु० ७) म० १ सू० ३१—३५ ।
(अनु० ८) म० १, सू० ३६—४३ । (अनु० ९) म० १, सू० ४४—५० ।
(अनु० १०) म० १, सू० ५१—५७ । (अनु० ११) म० १, सू० ५८—६४ ।
(अनु० १२) म० १, सू० ६५—७३ । (अनु० १३) म० १, सू० ७४—८४ ।
(अनु० १४) म० १, सू० ८५—९३ । (अनु० १५) म०१, सू० ९४—१०५ ।
(अनु०१६) म०१, सू०१०६—११५ । (अनु०१७) म०१, सू०११६—१२० ।
(अनु०१८) म०१, सू०१२१—१२६ । (अनु०१९) म०१, सू०१२७—१३३ ।
(अनु०२०) म०१, सू०१३४—१३९ । (अनु०२१) म०१, सू०१४०—१५६ ।
(अनु०२२) म०१, सू०१५७—१६४ । (अनु०२३) म०१, सू०१६५—१७९ ।
(अनु०२४) म०१, सू०१८०—१९१ ।

# अथ अनुवाकानुक्रमणी ।



पितृदेवर्षिसाध्येभ्यो ब्राह्मणेभ्यश्च सर्वशः ।
आचार्येभ्यो गुरुभ्यश्च प्रणम्य प्रयतः शुचिः ॥१॥
मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्हि तपोबलात् ।
दृष्टानामनुवाकानामृचु वक्ष्याम्यतन्द्रितः ॥२॥
आदौ सूक्तपरीमाणं सङ्ख्याञ्च क्रममेव च ।
मण्डले मण्डले चैव यावन्तो हि समीरिताः ॥३॥
सूक्तसङ्ख्यानुवाकानां सूक्तानामृक्समाहिताः ।
पादाक्षरसमाम्नायं छन्दश्चैव प्रतिष्ठितम् ॥४॥
एकैकमनुवाकन्तु खिलानि ब्राह्मणानि तु ।
संवत्सरे संवत्सरे पठेदक्षरहः शुचिः ॥५॥
श्रावणस्य तु मासस्य पौर्णमास्यामुपक्रमः ।
समाप्य तर्पयेद्देवान् पितॄनृषीननुक्रमात् ॥६॥
ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमम् ।
प्रमाणमनुवाकानां सूक्तैः शृणुत शाकलाः ॥७॥
कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च ।
वसिष्ठकश्यपावध्वर्श्वा जमदग्निरथोत्तमः ॥८॥
अग्निमीळे[1] त्रिसूक्तस्तु सुरूपे[2]न्द्र[3]चतुःसूक्तौ ।

(अनु॰ १) म॰ १, सू॰ १—३ । (अनु॰ २) म॰ १, सू॰ ४—७ ।
(अनु॰ ३) म॰ १, सू॰ ८—११ ।

अग्नि[4] समान[5]मित्येतौ षट्कौ कस्ये[6]ति सप्तकः ॥९॥
त्वमग्ने[7] पञ्चकं विद्यात्प्र वो यक्ष[8]मथाष्टकम् ।
अग्ने विवस्वद[9]भित्य[10] नूचित्ते[11] सप्तकास्त्रयः ॥१०॥
पश्वा न[12]नवकं विद्यादुपप्रयन्तो [13]दशैकश्च ।
खैलिकानामनादेशे अस्मिन् ग्रन्थेऽनुवाकानाम् ॥११॥
यस्तु पर्यायते वेदे तस्य सङ्ख्येति नः श्रुतिः ।
प्र ये शुम्भन्ते[14] नवकमिम[15] द्वादशकं विद्यात् ॥१२॥
इन्द्र मित्रं [16]दशैवाथ नासत्याभ्या[17]न्तु पञ्चकम् ।
कदित्था[18] षट् परः सप्ताग्नि[19]र्मा त्वा जुवः [20]षट्कम् ॥१३॥
वेदिषदे[21] सप्तदशाबोधी[22]त्यष्टौ सूक्तानि ।
कया[23]त्रिपञ्चसूक्तास्तु युवो[24]र्द्वादशकं विद्यात् ॥१४॥
इत्याद्ये मण्डले दृष्टाश्चत्वारो विंशतिश्च वै ।

---

(अनु॰ ४) म॰ १, सू॰ १२—१७ । (अनु॰ ५) म॰ १ सू॰ १८—२३ ।
(अनु॰ ६) म॰ १ सू॰ २४—३० । (अनु॰ ७) म॰ १ सू॰ ३१—३५ ।
(अनु॰ ८) म॰ १, सू॰ ३६—४३ । (अनु॰ ९) म॰ १, सू॰ ४४—५० ।
(अनु॰ १०) म॰ १, सू॰ ५१—५७ । (अनु॰ ११) म॰ १, सू॰ ५८—६४ ।
(अनु॰ १२) म॰ १, सू॰ ६५—७३ । (अनु॰ १३) म॰ १, सू॰ ७४—८४ ।
(अनु॰ १४) म॰ १, सू॰ ८५—९३ । (अनु॰ १५) म॰ १, सू॰ ९४—१०५ ।
(अनु॰ १६) म॰ १, सू॰ १०६—११५ । (अनु॰ १७ म॰ १, सू॰ ११६—१२० ।
(अनु॰ १८) म॰ १, सू॰ १२१—१२६ । (अनु॰ १९) म॰ १, सू॰ १२७—१३३ ।
(अनु॰ २०) म॰ १, सू॰ १३४—१३९ । (अनु॰ २१) म॰ १, सू॰ १४०—१५६ ।
(अनु॰ २२) म॰ १, सू॰ १५७—१६४ । (अनु॰ २३) म॰ १, सू॰ १६५—१७९ ।
(अनु॰ २४) म॰ १, सू॰ १८०—१९१ ।

गौतमाद्दौशिजः कुत्सः परुच्छेपादृषेः परः।
कुत्साद्दीर्घतमा इति एष वाष्कलकः क्रमः ॥१५॥

त्वं[१] यो[२]गणाना[३]मा ते[४] दश
तृतीयैकादशास्त्रयः परे।
सोमस्य मा तवस[१]न्द्वादशोक्तं
प्र वो देवाये[२]ति सप्तदशकन्तु विद्यात् ॥१६॥
इच्छन्ति त्वा[३]नवेन्द्रं मति-[४]
स्त्रिपञ्चको नवक इमं महे[५]।
त्वां ह्यग्ने[१]दश भद्रं[२] यज्ञ-[३]
स्त्वेकादशका उभाविमौ॥ १७॥
त्रयोदशायं प्र ऋभुभ्य [४]ईरितोऽयं
पिबे[५]त्येव चापि त्रयोदश।
अबोध्यग्निः समिधा [१]चतुर्दश
अतः परोऽष्टादशकः प्रवेधसे[२] ॥१८॥

---

(अनु॰ १) म॰ २, सू॰ १—११। (अनु॰ २) म॰ २, सू॰ १२—२२।
(अनु॰ ३) म॰ २, सू॰ २३—३२। (अनु॰ ४) म॰ २, सू॰ ३३—४३।
अनु॰ १) म॰ ३, सू॰ १—१२। (अनु॰ २)।म॰ ३, सू॰ १३—२९।
(अनु॰ ३) म॰ ३, सू॰ ३०—३८। (अनु॰ ४) म॰ ३, सू॰ ३९—५३।
(अनु॰ ५) म॰ ३, सू॰ ५४—६२।
(अनु॰ १) -॰ ४, सू॰ १—१०। (अनु॰ २) म॰ ४, सू॰ ११—२१।
अनु॰ ३) म॰ ४, सू॰ २२—३२। (अनु॰ ४) म॰ ४, सू॰ ३३—४५।
(अनु॰ ५) म॰ ४, सू॰ ४६—५८।
(अनु॰ १) म॰ ५, सू॰ १—१४। (अनु॰ २) म॰ ५, सू॰१५—३२।

मखि महे(३) द्वादशको विदा(४) तथा
स्तुधः (५)षोडश यद्य(६) विपञ्चकः ।
सं ह्यग्ने(१)पञ्चदश त्व(२)मष्टौ तथा
महो(३)विंशतिर्यो रयिवः (४)षट्कः ॥१९॥
द्विः षड्दूवे वः(५) सुपे(६)द्विसप्तकः
षष्ठः षष्ठे मण्डले योऽनुवाकः ।
अग्निं नरः (१)सप्तदशाथ षोडश
लेह यत्(२) प्र शुक्रा(३)द्व्यधिका तु विंशतिः ॥२०॥
क ई व्यक्ताः(४) पञ्चदशोनविंशति-
रप स्वसुः(५) पञ्चदश प्र वीरया(६) ।
मा चि(१)न्यत्रा इन्द्र (२)इन्द्रः सुतेषु(३)
पञ्चाथं सप्ताष्टौ वयं (४)द्विपञ्चकः ॥२१॥

---

(अनु० ३) म० ५, सू० ३३—४४ । (अनु० ४) म० ५, सू० ४५—५६ ।
(अनु० ५) म० ५, सू० ५७—७२ । (अनु० ६) म० ५, सू० ७३—८७ ।
(अनु० १) म० ६, सू० १—१५ । (अनु० २) म० ६, सू० १६—२३ ।
(अनु० ३) म० ६, सू० २४—३२ । (अनु० ४) म० ६, सू० ३३—४६ ।
(अनु० ५) म० ६, सू० ४७—६१ । (अनु० ६) म० ६, सू० ६२—७५ ।
(अनु० १) म० ७, सू० १—१७ । (अनु० २) म० ७, सू० १८—३३ ।
(अनु० ३) म० ७, सू० ३४—५५ । (अनु० ४) म० ७, सू० ५६—७० ।
(अनु० ५) म० ७, सू० ७१—८९ । (अनु० ६) म० ७, सू० ९०—१०४ ।
(अनु० १) म० ८, सू० १—५ । (अनु० २) म० ८, सू० ६—१२ ।
(अनु० ३) म० ८, सू० १३—२० । (अनु० ४) म० ८, सू० २१—२[illegible] ।

यो यजाति[५]द्वादशेमे[६]ह षड्वो-
ऽग्ने[७] दशैकादशको य [८]इत्युत।
त्रयोदश त्वन इन्द्र द्युमन्तं[९]
परो दशको गौर्धयत्यादिः[१०] ॥२२॥
स्वादिष्ठया[१]त्र्यष्टसूक्तः पवस्व[२]
त्रिंशत्सषट्कः परः सप्तकोऽया[३]।
प्रा[४]ष्टादशैकादशकः प्र ते[५]ऽस्य
प्रेषा [६]सप्तैकादशकः सखायः[७] ॥२३॥
अग्रे बृहन्[१]षोड़शकस्त्रयोदश
त्वष्टा[२]प्र देवत्रे[३]ति चाष्टादशाच्छा[४]।
अष्टाविदं[५] षोड़शकस्तु भद्राः[६]

---

(अनु० ५) म० ८, सू० ३१—४२। (अनु० ६) म० ८, सू० ४३—४८।
(अतः परं ११ एकादश सूक्तानि वालखिल्यम्)।
(अनु० ७) म० ८, सू०६०—६९। (अनु० ८) म० ८, सू० ७०—८०।
(अनु० ९) म० ८, सू० ८१—९३। (अनु० १०) म० ८, सू० ९४—१०३।
(अनु०१) म० ९, सू० १—२४। (अनु०२) म० ९, सू० २५—६०।
(अनु०३) म० ९, सू० ६१—६७। (अनु०४) म० ९, सू० ६८—८५।
(अनु०५) म० ९, सू० ८६—९६। (अनु० ६) म० ९, सू० ९७—१०३।
(अनु०७) म० ९, सू० १०४—११४।
(अनु०१) म० १०, सू० १—१६। (अनु०२) म०१०,सू०१७—२९।
(अनु०३) म० १०, सू० ३०—४२। (अनु०४) म० १०, सू० ४३—६०।
(अनु०५) म० १०, सू० ६१—६८। (अनु०६) म० १०, सू० ६९—८४।

सत्येन[7] षट् सं [8]नवेन्द्र [9]त्रयोदश ॥२४॥
नमस्व द्यावापृथिवी[10]द्यष्टकः
परस्तयोर्विंशतिर्ना सदासीत्[11]।
ऋग्वेदान्यो द्वादशकोऽनुवाक-
श्चत्वारिंशच्छास इत्ये[12]ति चास्मिन् ॥२५॥
आद्ये चतुर्विंशतिरिहानुवाका
अतः परं मण्डलं यच्चतुष्कम्।
द्वे पञ्चके चीणि षड्कानि चैव
दशाष्टमं सप्त नवमं द्वादशान्त्यम् ॥२६॥
एकाधिका स्याच्चवतिः शतञ्च
वदन्ति वै मण्डलमादितो यत्।
चत्वारिंशत्त्रीणि चाङ्कर्द्वितीयं
सूक्ते च षष्टिश्च तृतीयमाहुः ॥२७॥
अष्टापञ्चाशत्त्वपि यच्चतुर्थं
सप्ताधिकाशीतिरतः परं स्यात्।
पञ्चाधिका सप्ततिरुत्तरन्तु
चत्वारि वाशिष्ठमथो शतञ्च ॥२८॥
द्वे चैव सूक्ते नवतिश्च विद्या-

---

(अनु०७) म० १०, सू० ८५—९०। (अनु०८) म०१०, सू० ९१—९९।
(अनु०९) म०१०,सू०१००—११२। (अनु०१०)म०१०सू०११३—१२८।
(अनु०११)म०१०,सू०१२९—१५१। (अनु०१२)म०१०,सू०१५२—१९१।

दशाष्टमं नवमं वै शतं स्यात्।
चतुर्दश लाङ्गरयाधिकान्य-
ध्याये यदुक्तं दशमे तथैव ॥२८॥
एतत्सहस्रं दश सप्त चैवा-
ष्टावतो बाष्कलकेऽधिकानि।
तान् पारणे शाकले शैशिरीये
वदन्ति शिष्टा न खिलेषु विप्राः ॥३०॥
पञ्चाशीतिर्दाशतयेऽनुवाका
दृष्टाः पुराणऋषिभिर्महात्मभिः।
यस्तानृन्विदेद् चैवाप्यधीते
स नाकपृष्ठं भजते ह शश्वत् ॥३१॥
अध्यायानां चतुःषष्टिर्मण्डलानि दशैव तु।
वर्गाणां तु सहस्रे द्वे सङ्ख्याते च षडुत्तरे ॥३२॥
सहस्रमेतत् सूक्तानां निश्चितं खैलिकैर्विना।
दश सप्त च षयन्ते सङ्ख्यातं वै पदद्वयम् ॥३३॥
एकर्च एकवर्गः स्यादेकश्च नवकस्तथा।
द्वौ वर्गौ तु ऋचौ ज्ञेयौ ऊनं द्व्यशतं त्र्यृचम् ॥३४॥
चतुष्कं शतमेकञ्च चत्वारः सप्ततिस्तथा।
पञ्चकानां सहस्रन्तु द्वे च सप्तोत्तरे शते ॥३५॥
षौणि च शतानि षड्ढाणाञ्चत्वारिंशत् षड्वर्गाः।
शतमूनविंशकं सप्तकानां ऊना षष्टिरष्टकानाम् ॥३६॥
ऋचां दशसहस्राणि ऋचां पञ्चशतानि च।

ऋचामशीतिः पादश्च पारणं सम्प्रकीर्त्तितम् ॥२७॥
अर्धर्चानां सहस्राणामेकविंशतिकं तथा।
शतद्वयन्तु द्वात्रिंशत् सपादं मुनिभिः पुरा ॥२८॥
शाकल्यदृष्टे पदलक्षमेकं
सार्धञ्च वेदे त्रिसहस्रयुक्तम्।
शतानि चाष्टौ दशकद्वयञ्च
पदानि षट् चेति च चर्चितानि ॥२९॥

एकञ्च दशसहस्रं दश च सहस्राणि सप्त च शतानि चर्चापदानि ज्ञेयानि पदानि चान्यानि चत्वारि। चत्वारि वा शतसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि॥

इत्यनुवाकानुक्रमणी समाप्ता ॥

---

NOTE—The last 21 pages had not the benefit of the late Raja Rajendralala Mitra's revision.

